## ॥ ॐ श्रीगोपालो जयति ॥ विज्ञापनम् ॥

आर्यदेशनिवासियोंकों मैं प्रार्थना करता हूं, कि स्वधर्मरक्षक हरिगुरुके भक्त स्वजनमनुष्य इस पुस्तकको सदा सेवन करें और भक्ति श्रद्धासे इसका पाठ करे. श्रीगोपाल गोनाम ( इंद्रियोंके ) पालन करनेवाले जो सच्चिदानन्द ( सत् चित् आनन्दस्वरूप) श्रीकृष्णपरमात्मा देव सर्वानन्द ( संपूर्ण सुखके देनेवाले ) जो गोपालजी महाराज हैं उनके पंचांग नाम ( पटल, पद्धति, सहस्रनाम, कवच, स्तवराज, ये पांच हैं ) ये कहींभी

अबतक छापे नहीं थे· सो श्रीवैद्य कमलशरण गोस्वामी काशीनिवासीने हमको प्रसन्नतासें दिये· जो आप सालेमावादके श्रीजीके शिष्य होये तों ए अमूल्य वस्तुकों छापके प्रगट कर जाते· यह पुस्तक वाचनेसें अनेक स्वजन मनुष्यकों सुख प्राप्त होय ( आनन्द होय ), पहले धनसंतानकरके सुख होय, अंतसमयमें कल्याण होय, ( मुक्ति होय ) सादृश श्रीवृन्दावनमें ब्रह्मचारि ( गिरधारिदासजी )नें गोपालजीके कृपासें सर्वानंदकों प्राप्त भए यह अमूल्यरत्न स्वार्थ परमार्थवालेकों श्रेयस्कर हे ऐसा विज्ञापनावालेका अभिप्राय हे·

श्रीमन्नित्यकुंजविहारिराधाकृष्णौ विजयेतेतमाम् ॥

॥ अथ पटलं लिख्यते ॥ कृष्णायपदमाभाष्य गोविंदाय ततः परम् ॥ गोपीजनपदस्यांते वल्लभाय द्विधा विधिः ॥ १ ॥ कामबीजादिराख्यातो मनुरष्टादशाक्षरः ॥ अष्टार्णश्च दशार्णश्च उक्तो मंत्रो यथाविधि ॥ २ ॥ शक्तिं श्रीं पूर्वकोष्ठा दशार्णो विंशतिवर्णकः ॥ स्मर कृष्णाय ठद्वंद्वं षडर्णमनुरीरितः ॥ ३ ॥ प्रणवं हृदयं कृष्णं ङेंतमुक्त्वा ततः परम् ॥ तादृशं देवकीपुत्रं हुंफट्स्वाहासमन्वितम् ॥ ४ ॥ षोडशाक्षरमंत्रोऽयं गोविंदस्य समीरितः ॥

श्रीमन्मुकुंदचरणं सदेति शरणं ततः ॥ ५ ॥ अहं प्रपद्य इत्युक्तो मुकुंदोऽष्टादशाक्षरः ॥ पंचांतको धरासंस्थो मनुर्विदुविभूपितः ॥ ६ ॥ पिंडवीजमिति प्रोक्तं सर्वसिद्धिप्रदायकम् ॥ पिंडं रतिपतेर्वीजं नमो भगवते ततः ॥ ७ ॥ नंदपुत्राय बालादिवपुषे श्यामलाय च ॥ गोपीजनपदस्यांते वल्लभाय द्विधाविधिः ॥ ८ ॥ अनुष्टुप्स समाख्यातो गोपालस्य जगत्पतेः ॥ गोपालायाग्निजायाय षडक्षर उदाहृतः ॥ ९ ॥ कृष्णगोविंदकौ ङेंतौ सप्तवर्णो मनुर्मतः ॥ श्रीशक्तिमाराः कृष्णाय मारः सप्ताक्षरोऽप-

रः ॥ १० ॥ क्लींग्लौंक्लींश्यामलांगाय नतिः स्याद्द-
शवर्णकः ॥ चक्रीवामनसर्गौ च मनुरेकार्णकः स्मृ-
तः ॥ ११ ॥ काममिंद्रश्च माया च ल च लांछित-
मस्तकः ॥ एकवर्णो मनुः प्रोक्तः काममंत्रपुरोहि-
तः ॥ १२ ॥ एतत्पूर्वं हृषीकेशं चतुर्थ्यंतं नमःप-
दम् ॥ अष्टवर्णो मनुः प्रोक्तः सर्वेषां हृदये स्थितः
॥ १३ ॥ ऐं वाग्भवं कामबीजं च कृष्णाय सुरसुं-
दरी ॥ गोविंदं ङेयुतं चैव रमाबीजमनंतरम् ॥१४॥
दशाक्षरं ततः पश्चात्सौबीजं तदनंतरम् ॥ द्वाविं-
शत्यक्षरो मंत्रः सर्वसिद्धिप्रदायकः ॥१५॥ कामं मा-

यां च लक्ष्मीं च दशार्णं च ततः परम् ॥ त्रयोदशार्णो मंत्रो वै प्रोक्तः सर्वसमृद्धिदः ॥१६॥ कामं लक्ष्मीं च मायां च जयकृष्णपदद्वयम् ॥ मायां लक्ष्मीं तथा कामं जयं देहि पदद्वयम् ॥ १७ ॥ चतुर्विंशत्यक्षरात्मा स्वाहांतो मनुरीरितः ॥ कामं पिंडं तथा लक्ष्मीं गोपालाय ततः परम् ॥ १८ ॥ लक्ष्मीं पिंडं तथा कामं गोविंदायपदं तथा ॥ कामं पिंडं तथा लक्ष्मीं स्वाहांतः प्रणवादिकः ॥ १९ ॥ इति सनत्कुमारीये षष्ठपटलम् ॥ ॥ अथ गोपालपद्धतिर्लिख्यते ॥ रात्रेः पश्चिमयामस्य मुहूर्तो यस्तती-

यकः ॥ स ब्राह्म इति विज्ञेयो विहितः संप्रबोधने ॥ १ ॥ ब्राह्मे मुहूर्ते चोत्थाय स्वमूर्ध्नि श्रीगुरुं स्मरेत् ॥ आनंदमानंदकरं प्रसन्नं ज्ञानस्वरूपं निजभावयुक्तम् ॥ योगींद्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं नमामि ॥ १ ॥ ततः श्रीकृष्णं स्मरेत् ॥ नमामि राधापतिपादपल्लवं वदामि राधापतिनाम निर्मलम् ॥ भजामि राधापतितत्त्वमक्रियं करोमि राधापतिसेवनं मुदा ॥ २ ॥ इति पठन् ॥ उत्थितो यथावत् ॥ ततः पृथ्वीं प्रणमेत् ॥ समुद्रमेखले देवि पर्वतस्तनमंडले ॥ विष्णुपत्नि

नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥ इति पृथ्वीं संप्रार्थ्य श्वासानुसारेण भूमौ पादौ विनिक्षिपेत् ॥ शौचाचमनदंतधावनानि विधाय स्नानार्थं तीर्थे गच्छेत् ॥ तत्र पाणिपादौ प्रक्षाल्याचम्य ॥ ॐअद्य श्रीकृष्णप्रीत्यर्थं तांत्रिकस्नानमहं करिष्ये इति संकल्पः ॥ शिरसः पादपर्यंतं मृदमालिप्य निमज्ज्योन्मज्ज्य सूर्यमंडलमवलोक्य ॥ ब्रह्मांडोदरतीर्थानि करैः स्पृष्टानि ते रवे ॥ तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥ १ ॥ इति प्रार्थ्य अंकुशमुद्रया ॥ ॐ गंगे च यमुने चैव गोदावरि सरस्व-

ति ॥ नर्मदे सिंधु कावेरि जलेऽस्मिन्संनिधिं कुरु ॥
इति तीर्थान्यावाह्य जले एकीकृत्य संपूज्य नमस्कृ-
त्य मूलमंत्रं पठन् ॥ निमज्ज्योन्मज्ज्य कुंभमुद्रयात्मानं
एकादशवारं मूलेनाभिषिंचेत् ॥ जलेन तिलकाच-
मने कृत्वा मूलमुच्चार्य श्रीकृष्णं तर्पयामि ॥ इत्यंज-
लित्रयेण तर्पयेत् ॥ तीरमागत्य शुद्धे वाससी मूल-
मंत्रेण प्रोक्ष्य धेनुमुद्रां प्रदर्श्य परिधाय मूलमंत्रेण
द्वादश तिलकान् कृत्वा तांत्रिकीं संध्यां कुर्यात् ॥
ॐनम इति दक्षिणहस्तेन जलमादाय वामेनाच्छा-
द्य मूलमंत्रेण त्रिवारमभिमंत्र्य पिबेत् ॥ त्रिराचम्य

पुनः दक्षिणहस्तेन जलमादाय वामेनाच्छाद्य मूलमंत्रेण सकृदभिमंत्र्य तज्जलं वामहस्ते निक्षिप्य तदंगुलिविवरजलबिंदुभिः शिरसि प्रोक्षयेत् ॥ पुनस्तथैव जलमादाय वामेनाच्छाद्य सकृदभिमंत्र्य दक्षिणनासारंध्रेणाघ्राय तज्जलं शरीरांतर्गतं तेन सर्वं कलुषमाक्षालितं तत्कृष्णवर्णं भूत्वा वामनाड्या निर्गतं हस्ते आगतं विभाव्य वामभागे कल्पितवज्रशिलायामस्त्राय फट् इति मंत्रेणास्फालयेत् ॥ ततो मंत्रांते सूर्यमंडलस्थाय श्रीकृष्णाय इदमर्घ्यं समर्पयामि इत्यंजलित्रयं दद्यात् ॥ ततो

गायत्रीं जपेत् ॥ ॐ गोपालाय विद्महे गोपीवल्लभाय धीमहि ॥ तन्नः कृष्णः प्रचोदयात् ॥ ॐ गोपालाय अंगुष्ठाभ्यां नमः ॥ विद्महे तर्जनीभ्यां नमः ॥ गोपीवल्लभाय मध्यमाभ्यां नमः ॥ धीमहि अनामिकाभ्यां नमः ॥ तन्नः कृष्णः कनिष्ठिकाभ्यां नमः ॥ प्रचोदयात् करतलकरपृष्ठाभ्यां नमः ॥ इति करन्यासः ॥ ॐ गोपालाय हृदयाय नमः ॥ विद्महे शिरसे स्वाहा ॥ गोपीवल्लभाय शिखायै वषट् ॥ धीमहि कवचाय हुम्॥तन्नः कृष्णः नेत्रत्रयाय वौषट् ॥ प्रचोदयात् अस्त्राय फट् ॥ इति विन्यस्य अष्टोत्तर-

शतवारमष्टाविंशतिर्वा जपेत् ॥ इति त्रिषु का-
लेषु संध्याविधिः ॥ जपांते जलमध्ये अष्टदलं पद्मं
लिखित्वा तत्र कामबीजं विलिख्य ॥ ॐ गुरूंस्त-
र्पयामि ॥ परमगुरूंस्तर्पयामि ॥ महागुरूंस्तर्प-
यामि ॥ अस्मद्गुरूंस्तर्पयामि ॥ नारदादिदेवर्षींस्त-
र्पयामि ॥ पूर्वसिद्धांस्तर्पयामि ॥ भागवतांस्तर्पया-
मि ॥ ॐ नमो भगवते विष्णवे सर्वभूतात्मने वा-
सुदेवाय सर्वात्मने योगपद्मपीठात्मने नमः ॥ यो-
गपीठात्मकं श्रीकृष्णं तर्पयामि ॥ इति कर्णिका-
यां श्रीकृष्णं ध्यात्वा ॥ मूलमंत्रांते श्रीकृष्णं त-

र्पयामि ॥ इति अष्टाविंशतिवारं तर्पयेत् ॥ इति संतर्प्य नमस्कुर्यादिति तर्पणम् ॥ अथ स्तोत्रं पठन्मौनी वा गृहं प्रति व्रजेत् ॥ पाणिपादौ प्रक्षाल्याचम्य दक्षिणपादेन देहलीमस्पृशन् देवगृहं प्रविशेत् ॥ तत्रासनमास्तीर्य ॥ ॐ आधारशक्तिकमलासनाय नमः इति धेनुमुद्रां प्रदर्श्य आसने उपविश्य ॥ ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥ त्वं च धारय मां देवि पवित्रं कुरु चासनं नमः ॥ इति तर्जनीभ्यां भुवं स्पृष्ट्वा ॥ अपसर्पंतु ते भूता ये भूता भुवि संस्थिताः ॥ ये

भूता विघ्नकर्तारस्ते नश्यंतु शिवाज्ञया ॥ इति
वामपादांगुष्ठं गृहीत्वा तत्पाण्यां त्रिभूमिमाहत्य
प्राङ्मुख उदङ्मुखो वा स्वस्तिकाद्यासनं बद्ध्वा ॥
ॐ श्रीगुरुभ्यो नमः ॥ परमगुरुभ्यो नमः ॥ परा-
त्परगुरुभ्यो नमः ॥ सर्वगुरुभ्यो नमः ॥ अस्मद्गुरु-
भ्यो नमः ॥ इति गुरून्नमस्कृत्य ॥ अस्त्राय फट् ॥
अनेन अष्टावृत्त्या करशुद्धिं विधाय गंधपुष्पमर्द-
नेन हस्तौ संस्कृत्य ॥ ततः त्रितालनाराचमुष्टिद-
शदिग्बंधनाग्निप्रकारात्मरक्षणादि विदध्यात् ॥ इति
आसनविधिः ॥ अथ भूतशुद्धिः ॥ श्रीकृष्णाराध-

नयोग्यतासिद्ध्यर्थं भूतशुद्धिमहं करिष्ये ॥ इति संकल्प्य कच्छपीमुद्रया हृदि स्थितं दीपकलिकाकारं जीवज्योतिः परतेजसि लीनं विचिंत्य ॥ वामकुक्षौ कृष्णवर्णं पापपुरुषं ध्यात्वा यं इति वायुबीजेन षोडशवारजपेन पूरकेण संशोष्य रं इति अग्निबीजेन चतुःषष्टिवारजपेन कुंभकेन पापपुरुषं दग्ध्वा वं इति वरुणबीजेन द्वात्रिंशद्वारजपेन अमृतवृष्टिं ध्यात्वा तया अमृतमयं शरीरं उत्पन्नं विचिंतयेत् ॥ इति भूतशुद्धिः ॥ अथ प्राणप्रतिष्ठा ॥ अस्य श्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मवि-

ष्णुमहेशा ऋषयः ॥ ऋग्यजुःसामानि छंदांसि ॥ प्राणशक्तिर्देवता आं वीजं ह्रीं शक्तिः ॥ क्रौं कीलकं॥ प्राणप्रतिष्ठार्थे विनियोगः ॥ हृदि हस्तं दत्वा ॥ ॐ आंह्रींक्रौं यंरंलंवंशंषंसंहंहः सोहं ॥ मम प्राणाः मम इंद्रियाणि मम वाङ्मनश्चक्षुःश्रोत्रघ्राण-प्राणा इहागत्य सुखं चिरं तिष्ठंतु स्वाहा ॥ ततो हृदयं स्पृष्ट्वा षोडशप्रणवावृत्त्या यथोचितसंस्कारान् भावयेत् इति प्राणप्रतिष्ठा ॥ अथ मातृकान्यासः ॥ अंगुष्ठानामिकाभ्यां च न्यासः सर्वत्र संस्मृतः ॥ इति पद्यवाहिन्यासः ॥ अस्य ब्रह्मा

ऋषिः ॥ गायत्री छंदः ॥ मातृकासरस्वती देवता ॥ हलो बीजानि ॥ स्वराः शक्तयः ॥ श्रीकृष्णमंत्रांगत्वे विनियोगः ॥ कंठे षोडशदले ॥ अंनमः ॥ आंनमः ॥ इंनमः ॥ ईंनमः ॥ उंनमः ॥ ऊंनमः ॥ ऋंनमः ॥ ॠंनमः ॥ ऌंनमः ॥ ॡंनमः ॥ एंनमः ॥ ऐंनमः ॥ ओंनमः ॥ औंनमः ॥ अंनमः ॥ अःनमः॥ हृदये द्वादशदले ॥ कंनमः ॥ खंनमः ॥ गंनमः ॥ घंनमः ॥ ङंनमः ॥ चंनमः ॥ छंनमः ॥ जंनमः ॥ झंनमः ॥ ञंनमः ॥ टंनमः ॥ ठंनमः ॥ नाभौ दशदले ॥ डंनमः ॥ ढंनमः ॥ णंनमः ॥ तंनमः ॥

थंनमः ॥ दंनमः ॥ धंनमः ॥ नंनमः ॥ पंनमः ॥
फंनमः ॥ लिंगमूले षड्दले ॥ बंनमः ॥ भंनमः ॥
मंनमः ॥ यंनमः ॥ रंनमः ॥ लंनमः ॥ आधारे
चतुर्दले ॥ वंनमः॥शंनमः॥षंनमः॥ संनमः॥ भ्रूमध्ये
द्विदले ॥ हंनमः ॥ क्षंनमः ॥ इत्यंतर्मातृकान्यासः ॥
अंनमः ॥ ललाटे ॥ आंनमः ॥ मुखवृत्ते ॥ इंनमः ॥
दक्षिणनेत्रे ॥ ईंनमः ॥ वामनेत्रे ॥ उंनमः ॥ दक्षि-
णश्रोत्रे ॥ ऊंनमः ॥ वामश्रोत्रे ॥ ऋंनमः ॥ दक्षि-
णनासापुटे ॥ ॠंनमः ॥ वामनासापुटे ॥ ऌंनमः ॥
दक्षिणगंडे ॥ ॡंनमः ॥ वामगंडे ॥ एंनमः ॥

ऊर्ध्वोष्ठे ॥ ऐंनमः ॥ अधरोष्ठे ॥ ओंनमः ॥ ऊर्ध्वदं-
तपंक्तौ ॥ औंनमः ॥ अधोदंतपंक्तौ ॥ अंनमः ॥
शिरसि ॥ अःनमः ॥ मुखे ॥ १६ ॥ कंनमः ॥ दक्ष-
बाहुमूले ॥ खंनमः ॥ कूर्परे ॥ गंनमः ॥ मणिबंधे ॥
घंनमः ॥ अंगुलिमूले ॥ ङंनमः ॥ अंगुल्यग्रे ॥
चंनमः ॥ वामबाहुमूले ॥ छंनमः ॥ कूर्परे ॥ जंनमः॥
मणिबंधे ॥ झंनमः ॥ अंगुलिमूले ॥ ञंनमः ॥
अंगुल्यग्रे ॥ टंनमः ॥ दक्षिणपादमूले ॥ ठंनमः ॥
जानुनि ॥ डंनमः ॥ गुल्फे ॥ ढंनमः ॥ पादांगुलि-
मूले ॥ णंनमः ॥ पादांगुल्यग्रे ॥ तंनमः ॥ वाम-

पादमूले ॥ थंनमः ॥ वामजानुनि ॥ दंनमः ॥ वाम-
गुल्फे ॥ धंनमः ॥ वामपादांगुलिमूले ॥ नंनमः ॥
वामपादांगुल्यग्रे॥पंनमः ॥ दक्षपार्श्वे॥फंनमः ॥ पृष्ठे ॥
भंनमः॥नाभौ ॥ मंनमः ॥ उदरे॥यंनमः ॥ वक्षसि ॥
रंनमः ॥ दक्षकुक्षौ ॥ लंनमः ॥ ककुदि ॥ वंनमः ॥
वामकुक्षौ ॥ शंनमः ॥ हृदादिदक्षबाहौ ॥ षंनमः ॥
हृदादिवामबाहौ ॥ संनमः ॥ हृदादिदक्षपादपर्यंतं ॥
हंनमः ॥ हृदादिवामपादपर्यंतं ॥ ळंनमः ॥ हृदादि-
जठरांतं ॥ क्षंनमः ॥ हृदादिमुखांतपर्यंतं न्यसेत् ॥
इत्यादिरूपं ॥ इतिकेवलमातृकान्यासः ॥ तत-

स्तेषु स्थानेषु सविंदुमातृकापीठं न्यसेत् ॥ ॥
अथ केशवादिमातृकान्यासस्य ॥ प्रजापतिर्ऋषिः ॥
गायत्रीच्छंदः ॥ श्रीलक्ष्मीनारायणो देवता ॥
हलो बीजानि ॥ स्वरसंग्रहशक्तिः ॥ देहशुद्धिपूर्वकं
पुरुषार्थचतुष्टये विनियोगः ॥ अंकेशवाय कीर्त्यै
नमः ॥ ललाटे ॥ आंनारायणाय कांत्यै नमः ॥
मुखवृत्ते ॥ इंमाधवाय तुष्ट्यै नमः ॥ दक्षिण-
नेत्रे ॥ ईंगोविंदाय पुष्ट्यै नमः ॥ वामनेत्रे ॥ उंवि-
ष्णवे धृत्यै नमः ॥ दक्षिणकर्णे ॥ ऊं मधुसूदनाय
शांत्यै नमः ॥ वामकर्णे ॥ ऋंत्रिविक्रमाय क्रियायै

स्तेषु स्थानेषु सबिंदुमातृकापीठं न्यसेत् ॥ ॥
अथ केशवादिमातृकान्यासस्य ॥ प्रजापतिर्ऋषिः ॥
गायत्रीच्छंदः ॥ श्रीलक्ष्मीनारायणो देवता ॥
हलो बीजानि ॥ स्वरसंग्रहशक्तिः ॥ देहशुद्धिपूर्वकं
पुरुषार्थचतुष्टये विनियोगः ॥ अंकेशवाय कीर्त्यै
नमः ॥ ललाटे ॥ आंनारायणाय कांत्यै नमः ॥
मुखवृत्ते ॥ इंमाधवाय तुष्ट्यै नमः ॥ दक्षिण-
नेत्रे ॥ ईंगोविंदाय पुष्ट्यै नमः ॥ वामनेत्रे ॥ उंवि-
ष्णवे धृत्यै नमः ॥ दक्षिणकर्णे ॥ ऊं मधुसूदनाय
शांत्यै नमः ॥ वामकर्णे ॥ ऋंत्रिविक्रमाय क्रियायै

खड्गिने सत्यायै नमः ॥ अंगुलिमूले ॥ ङंशंखिने चंडायै नमः ॥ अंगुल्यग्रे ॥ चंहलिने वाण्यै नमः ॥ वामबाहुमूले ॥ छंमुसलिने विलासिन्यै नमः ॥ कूर्परे ॥ जंशूलिने विजयायै नमः ॥ मणिबंधे ॥ झंपाणिने विरजायै नमः ॥ अंगुलिमूले ॥ ञंअंकुशिने विश्वायै नमः ॥ अंगुल्यग्रे ॥ टंमुकुंदाय विमदायै नमः ॥ दक्षपादमूले ॥ ठंनंदजाय सुनंदायै नमः ॥ जानुनि ॥ डंनंदिने स्मृत्यै नमः ॥ गुल्फे ॥ ढंनारायणाय ऋद्धै नमः ॥ अंगुलिमूले ॥ णंनरकजिते समृद्धै नमः ॥ अंगुल्यग्रे ॥ तंहरये शुद्धै नमः ॥ वा-

मपादमूले ॥ थंकृष्णाय वुद्ध्यै नमः ॥ जानुनि ॥ दं
सत्याय भुक्त्यै नमः ॥ गुल्फे ॥ धंसात्वताय सत्यै
नमः ॥ पादांगुलिमूले ॥ नंशौरये क्षमायै नमः ॥
पादांगुल्यग्रे ॥ पंपरशुरामाय रमायै नमः ॥ दक्षपा-
र्श्वे ॥ फंजनार्दनाय उमायै नमः ॥ वामपार्श्वे ॥
वंभूधराय क्लेदिन्यै नमः ॥ पृष्ठे ॥ भंविश्वादिमूर्त-
ये क्लिन्नायै नमः ॥ नाभौ ॥ मंवैकुंठाय वसुदायै नमः॥
॥ उदरे ॥ यंत्वगात्मने पुरुषोत्तमाय वसुधायै
नमः ॥ वक्षसि ॥ रंअमृतात्मने वलिने परायै नमः
॥ दक्षकक्षे ॥ लंमानसात्मने बलानुजाय परायणा-

ये नमः ॥ ककुदि ॥ वंमेदात्मने वलाय सूक्ष्मायै
नमः ॥वामकक्षे ॥ शंअस्थ्यात्मने वृषघ्नाय संध्या-
यै नमः ॥ हृदादिदक्षहस्ते ॥ षंमज्जात्मने वृषाय
प्रज्ञायै नमः ॥ हृदादिवामहस्ते ॥ संशुक्रात्मने हं-
साय प्रभायै नमः ॥ हृदादिदक्षिणपादे ॥ हंप्राणा-
त्मने वराहाय निशायै नमः ॥ हृदादिवामपादे ॥
ळंशक्त्यात्मनेविमलाय अमोघायै नमः ॥ हृदयाज्ज-
ठरावधि ॥ क्षंक्रोधात्मने नृसिंहाय विद्युते नमः ॥
हृदयान्मुखावधि ॥ केशवादिरयं न्यासो न्यासमा-
त्रेण देहिनाम् ॥ अच्युतत्वं ददात्येव सत्यं सत्यं न

संशयः ॥ इति सकलवैष्णवविद्यासु अधिकार-
संपादककेशवादिमातृकान्यासः ॥ ॥ अथ त-
त्त्वन्यासः ॥ मंनमः पराय जीवात्मने नमः ॥ १ ॥
भंनमः पराय प्राणात्मने नमः ॥ इति द्वयं सकल-
शरीरे ॥ वंनमः पराय बुद्ध्यात्मने नमः ॥
फंनमः पराय अहंकारात्मने नमः ॥ पंनमः पराय
मन आत्मने नमः ॥ एतत्त्रयं हृदि ॥ नंनमः पराय श-
ब्दात्मने नमः शिरसि ॥ धंनमः पराय स्पर्शात्म-
ने नमः ॥ मुखे ॥ दंनमः पराय रूपात्मने नमः ॥ हृदि ॥
थंनमः पराय रसात्मने नमः ॥ गुह्ये ॥ तंनमः प-

राय गंधात्मने नमः ॥ पादयोः ॥ णंनमः पराय श्रोत्रात्मने नमः ॥ श्रोत्रयोः ॥ ढंनमः पराय त्वगात्मने नमः ॥ त्वचि ॥ डंनमः पराय चक्षुरात्मने नमः ॥ चक्षुषोः ॥ ठंनमः पराय जिह्वात्मने नमः ॥ रसनायां ॥ टंनमः पराय घ्राणात्मने नमः ॥ घ्राणयोः ॥ ञंनमः पराय वागात्मने नमः ॥ मुखे ॥ झंनमः पराय पाण्यात्मने नमः ॥ हस्तयोः ॥ जंनमः पराय पादात्मने नमः ॥ पादयोः ॥ छंनमः पराय पायुतत्त्वात्मने नमः ॥ गुदे ॥ चंनमः पराय उपस्थतत्त्वात्मने नमः ॥ उपस्थे ॥ ङंनमः पराय आ-

काशतत्त्वात्मने नमः ॥ मूर्ध्नि ॥ घंनमः पराय वायु-
तत्त्वात्मने नमः ॥ मुखे ॥ गंनमः ॥ पराय तेजआ-
त्मने नमः ॥ हृदि ॥ खंनमः पराय अंब्वात्मने
नमः ॥ गुह्ये ॥ कंनमः पराय पृथिव्यात्मने नमः ॥
पादयोः ॥ शंनमः पराय हृत्पुंडरीकात्मने नमः
॥ १ ॥ हंनमः पराय द्वादशकलाव्याप्तसूर्यमंडला-
त्मने नमः ॥ २ ॥ संनमः पराय षोडशकलाव्या-
प्तचंद्रमंडलात्मने नमः ॥ ३ ॥ वंनमः दशकला-
व्याप्तवह्निमंडलात्मने नमः ॥ ४ ॥ एतच्चतुष्टयं
हृदि ॥ पंनमः पराय श्रीवासुदेवाय परमेष्ठ्यात्मने

नमः ॥ शिरसि ॥ यंनमः पराय संकर्षणाय पुरुषात्मने नमः ॥ मुखे ॥ लंनमः पराय प्रद्युम्नाय विश्वात्मने नमः ॥ हृदि ॥ रंनमः पराय अनिरुद्धाय निवृत्त्यात्मने नमः ॥ गुह्ये ॥ ळंनमः पराय नारायणाय सर्वात्मने नमः ॥ पादयोः ॥ क्षंनमः पराय नृसिंहाय कोपतत्त्वात्मने नमः ॥ सकलशरीरे ॥ इति तत्त्वन्यासः ॥ ॥ अथेंद्रियन्यासः ॥ ॐ दिग्भ्यो नमः ॥ श्रोत्रयोः ॥ आदित्याय नमः॥ नेत्रयोः॥ वायवे नमः॥ त्वचि ॥ वरुणाय नमः॥ जिह्वायाम् ॥ अग्नये नमः ॥ वाचि ॥ इंद्रायनमः॥हस्तयोः॥विष्णवे

नमः ॥ पादयोः ॥ मित्राय नमः पायौ ॥ प्रजापतये नमः ॥ गुह्ये ॥ चंद्रायनमः ॥ मनसि ॥ ब्रह्मणे नमः बुद्धौ ॥ रुद्राय नमः ॥ अहंकारे ॥ ईश्वराय नमः ॥ मनसि ॥ चैतन्याय नमः ॥ चित्ते ॥ इति इंद्रियशुद्ध्यर्थे इंद्रियन्यासः ॥ ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगयोगपद्मपीठात्मने नमः ॥ इति महामंत्रेण व्यापकतया सर्वांगे न्यसेत् ॥ इति पीठन्यासः ॥ प्राणायामं कुर्यात् ॥ ॥ अथ मूलमंत्रन्यासः ॥ ॐ अस्य श्रीगोपालाष्टादशाक्षरमंत्रस्य नारद ऋषिः ॥ गायत्रीछंदः ॥ श्री-

कृष्णः परमात्मा देवता क्लीं वीजं ॥ स्वाहाशक्तिः ॥
ऱ्हीं कीलकं ॥ श्रीकृष्णप्रीत्यर्थे जपे विनियोगः ॥
ॐ नारदाय ऋषये नमः ॥ शिरसि ॥ गायत्रीछं-
दसे नमः ॥ मुखे ॥ श्रीकृष्णदेवतायै नमः ॥ हृदये॥
क्लींवीजायनमः ॥ गुह्ये ॥ स्वाहाशक्त्यै नमः ॥ पाद-
योः ॥ ऱ्हींकीलकाय नमः ॥ सर्वांगे ॥ इति ऋष्या-
दिन्यासः ॥ क्लींअंगुष्ठाभ्यां नमः ॥ कृष्णाय तर्ज-
नीभ्यां नमः ॥ गोविंदाय मध्यमाभ्यां नमः ॥
गोपीजन अनामिकाभ्यां नमः ॥ वल्लभाय क-
निष्ठिकाभ्यां नमः ॥ स्वाहा करतलकरपृष्ठा-

भ्यां नमः ॥ इति करन्यासः ॥ क्लीं हृदयाय नमः ॥ कृष्णाय शिरसे स्वाहा ॥ गोविंदाय शिखायै वषट् ॥ गोपीजन कवचाय हुं ॥ वल्लभाय नेत्रत्रयाय वौषट् ॥ स्वाहा अस्त्राय फट् ॥ अथ अक्षरन्यासः ॥ क्लीं मूर्ध्नि ॥ कृं भाले ॥ ष्णां भ्रुवोः॥ यं नेत्रयोः ॥ गों कर्णयोः ॥ विं नासिकयोः ॥ दां आस्ये ॥ यं कंठे ॥ गों दोर्मूलयोः ॥ पीं हृदये ॥ जं उदरे ॥ नं नाभौ ॥ वं लिंगे ॥ लं गुह्ये ॥ भां कट्यां॥ यं जान्वोः ॥ स्वां गुल्फयोः ॥ हां पादयोः ॥ इति वर्णन्यासः ॥ हुं सुदर्शनाय अस्त्राय फडिति ॥

रक्षां कुर्यात् ॥ अथ प्राणायामः ॥ क्लीं इति षोडशवारं जपेत् ॥ वामनाड्या वायुं पूरयेत् ॥ पुनः चतुःषष्टिवारजपेन कुंभकं कृत्वा ॥ द्वात्रिंशद्वारजपेन रेचयेत् ॥ अथ ध्यानम् ॥ फुल्लेंदीवरकांतिमिंदुवदनं बर्हावतंसप्रियं श्रीवत्सांकमुदारकौस्तुभधरं पीतांबरं सुंदरम् ॥ गोपीनां नयनोत्पलार्चिततनुं गोगोपसंघावृतं गोविंदं कलवेणुवादनपरं दिव्यांगभूषं भजे ॥ १ ॥ इति ध्यात्वा ॥ मानसैः पंचोपचारैः संपूज्य जपं कुर्यात् ॥ सहस्रम् अष्टोत्तरशतं वा यथोत्साहम् ॥ गुह्यातिगुह्यगोप्ता त्वं गृहा-

णास्मत्कृतं जपम् ॥ सिद्धिर्भवतु मे देव त्वत्प्रसादा-
त्त्वयि स्थितिः ॥ इति जपं समर्प्य स्तुत्वा वहिः पू-
जां समारभेत् ॥ तत्र पात्रस्थापनं पृष्ठे हस्तप्र-
क्षालनपात्रं ॥ वामे कलशः ॥ दक्षिणे गंधपुष्प-
वस्त्रधूपादीनि ॥ वामहस्तनिकटे घंटां ॥ देवदक्षिणे
घृतदीपं वामे तैलदीपं संस्थाप्य ॥ अथ शंखस्था
पनम् ॥ स्वपुरतो वामभागे गंधोदकेन त्रिकोणषट्-
कोणवर्तुलचतुरस्रमंडलमालिख्य ॐ नमः ॥ इति
गंधपुष्पाभ्यां मंडलं संपूज्य तत्र प्रक्षालितत्रि-
पादिकां संस्थाप्य ॥ मं दशकलात्मने वह्निमंडला-

य नमः ॥ इति गंधपुष्पाक्षतैस्त्रिपादिकां संपूज्य ॥ अं द्वादशकलात्मने सूर्यमंडलाय नमः ॥ इति शंखं संपूज्य मूलमंत्रेण शुद्धोदकेन शंखमापूर्य ॥ ॐषोडशकलात्मने सोममंडलाय नमः ॥ इति शंखतोयं च पूजयित्वा ॥ गंगेच यमुने चैव० ॥ तीर्थान्यावाह्य संयोज्य संपूज्य ॥ ॐ अमृते अमृतोद्भवे अमृतस्राविणि अमृतं स्रावय स्रावय क्लीं ॥ इति मंत्रेण धेनुमुद्रां प्रदर्शयित्वा ॥ शंख ॥ १ ॥ चक्र ॥२॥ गदा ॥ ३ ॥ पद्म ॥ ४ ॥ गरुड ॥ ५ ॥ मत्स्य ॥ ६ ॥ मुद्राः प्रदर्शयित्वा दक्षिणहस्तानामिकांगुष्ठा-

भ्यांशंखोभयपार्श्वे धृत्वा ॥ उपरि प्रसारिततर्जनीमध्यमाधृतविलंबमजयाकुसुमेन वा शंखजलं स्पृशन् ॥ अष्टवारं मंत्रं जपेत् ॥ ततः सूक्ष्मपात्रेण शंखजलं गृहीत्वा कलशे क्षिपेत् ॥ मूलेन सकृत् आत्मानं प्रोक्ष्य सकलं पूजासाधनं च प्रोक्षयेत् ॥ इति शंखपूजाविधिः ॥ अथ शंखदक्षिणे पाद्यपात्रम् ॥ तत्र श्यामाक॥ १ ॥ दूर्वा ॥ २ ॥ अब्ज ॥ ३ ॥ विष्णुक्रांता निक्षिप्य शंखस्य उत्तरे ॥ अर्घपात्रम् तत्र गंध ॥ १ ॥ पुष्प ॥ २ ॥ अक्षत ॥ ३ ॥ कुशाग्र ॥ ४ ॥ तिल ॥ ५ ॥ सर्षप ॥ ६ ॥

दूर्वा ॥ ७ ॥ निक्षिपेत् ॥ शंखस्य पूर्वे आचमनपात्रम् ॥ तत्र जातीफलं ॥ १ ॥ लवंग ॥ २ ॥ कंकोलान्निक्षिपेत् शंखस्य पश्चिमे मधुपर्कपात्रम् ॥ तत्र दधि मधु घृतं क्षिपेत् ॥ द्रव्याभावे तत्तन्नाम्ना गंधतुलसीकृता सर्वत्र योज्याः ॥ ततः सर्वाणि पात्राणि मूलमुच्चरन् कलशजलेन पूरयित्वा गंधपुष्पैरभ्यर्च्य एकैकशो मूलेनाभिमंत्र्य किंचित् शंखांबु दत्त्वा धेनुमुद्रां महामुद्रां च प्रदर्शयेत् ॥ इति पादपूजनम् ॥ भूमौ अष्टदलं पद्मं लिखित्वा तस्मिन् सिंहासनं न्यसेत् ॥ महापीठमं-

त्रेण पुष्पांजलिं दत्वा सत्यभामानंदस्वरूपं परं धाम इति चिंतयेत् ॥ इति पीठपूजाविधिः ॥ ततः ताम्रपात्रे श्रीकृष्णस्वरूपं स्थापयित्वा पुष्पांजलिं कृत्वा पंचांगन्यासं कुर्यात् ॥ ततो मूलमुच्चार्य श्रीकृष्ण एष ते अर्घः स्वाहा ॥ इति शिरसे स्वाहा ॥ अर्घ्यं दद्यात् ॥ मूलमुच्चार्य श्रीकृष्ण इदं ते पाद्यं नमः ॥ इति पादयोर्दद्यात् ॥ पुनः मूलमु० श्रीकृष्ण इदमाचमनीयं सुधा इति मुखे ॥ पुनर्मूलमु० श्रीकृष्ण एष ते मधुपर्कः सुधा इति मुखे ॥ पुनर्मूलमु० पुनराचमनं ॥ ततः शंखतोयेन स्नापयेत् ॥ अंगओं-

छनं ॥ ततो वस्त्रं यज्ञोपवीतं भूषणानि समर्पयेत् ॥ गंधं पुष्पं धूपं दीपं च समर्पयेत् ॥ नैवेद्यमानीय मूलेन प्रोक्ष्य गंधपुष्पादिनाभ्यर्च्य ॥ यं ॥ इति वायुबीजेन अष्टवारजप्तेन नैवेद्यदोषान् संशोष्य ॥ रं ॥ इति अग्निबीजेन नैवेद्यदोषान् दग्ध्वा॥वं ॥ इति अमृतबीजेन नैवेद्यं अमृतमयं इति चिंतयेत् ॥ धेनुमुद्रां महामुद्रां च दर्शयेत् ॥ चक्रमुद्रया संरक्ष्य मूलेनाभिमंत्रयेत् ॥ ॐ अमृतोपस्तरणमसि स्वाहा ॥ इति आपोशनं विभाव्य मूलमंत्रांते सांगाय सपरिवाराय श्रीकृष्णाय नैवेद्यं समर्पयामीति शं-

खजलं किंचिद्दत्वा नैवेद्यपात्रं स्पृष्ट्वा वामेन विक-
चोत्पलसंनिभां ग्रासमुद्रां दर्शयेत् ॥ ॐप्राणाय
स्वाहा॥ ॐ अपानाय स्वाहा॥ॐ व्यानाय स्वाहा॥
ॐ उदानाय स्वाहा ॥ ॐ समानाय स्वाहा ॥ इति
पंच प्राणाहुतीश्चिंतयेत् ॥ ततो भगवते भोजनं
चिंतयेत् ॥ यथाशक्ति मंत्रं जपेत् ॥ ततः अमृता-
पिधानमसि स्वाहा ॥ इति उत्तरापोशनं दत्वा
आचामयेत् ॥ ततस्तांबूलार्पणं नीराजनम् ॥ ततः
सजलं शंखं देवोपरि भ्रामयित्वा तज्जलेन समंता-
द्वर्तमानं आत्मानं च प्रोक्षयेत् ॥ ततोऽपराधक्षमा-

पणम् ॥ मंत्रहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ॥ तत्सर्वं क्षम्यतां देव दीनं मामात्मसात्कुरु ॥ अपराधसहस्राणि क्रियंतेऽहर्निशं मया ॥ तानि सर्वाणि मे देव क्षमस्व मधुसूदन ॥ इति क्षमाप्य ॥ सर्वतीर्थमयाय श्रीकृष्णपादोदकाय नमः ॥ इति ॥ गंधपुष्पाभ्यां अभ्यर्च्य तीर्थपात्रं शिरसि निधाय आधारे स्थापयेत् ॥ न तु केवलायां भूमौ ॥ बलिर्विभीषणो भीष्मः कपिलो नारदोऽर्जुनः ॥ प्रह्लादश्चांबरीषश्च वसुर्वायुसुतः शिवः ॥ विष्वक्सेनोद्धवाक्रूराः सनकाद्याः शुकादयः ॥ आयातु वैष्णवाः सर्वे दीनोद्धर-

णतत्पराः ॥ तेभ्यो हरिपादोदकं दत्वा अन्येभ्योऽपि सन्निकटस्थवैष्णवेभ्यो हरिचंदननिर्माल्यपादोदकं विभज्य ॥ पश्चात्स्वयं निषेवेत् ॥ यथाशक्ति जपं कृत्वा स्तोत्रपाठं कृत्वा प्रदक्षिणनमस्कारादिकुर्यात् ॥ कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्मम ॥ अंतश्चारेण भूतानां द्रष्टासि वरदः सदा ॥१॥ यद्दत्तं भक्तिमात्रेण पत्रं पुष्पं फलं जलम् ॥ आवेदितं निवेद्यं च तद्गृहाणानुकंपया ॥ २ ॥ इति कृतमाराधनं भगवते समर्प्य यथासुखं विहरेत् ॥३॥ इति श्रीकृष्णाराधनसंक्षेपपद्धतिः ॥ ॥ अथ कवचम् ॥

पुलस्त्य उवाच ॥ भगवन्सर्वधर्मज्ञ कवचं यत्प्रकाशितम् ॥ त्रैलोक्यमंगलं नाम कृपया कथय प्रभो ॥ १ ॥ सनत्कुमार उवाच ॥ शृणु वक्ष्यामि विप्रेंद्र कवचं परमाद्भुतम् ॥ नारायणेन कथितं कृपया ब्रह्मणे पुरा ॥ २ ॥ ब्रह्मणा कथितं मह्यं परं स्नेहाद्ददामि ते ॥ अतिगुह्यतमं तत्त्वं ब्रह्ममंत्रौघविग्रहम् ॥३॥ यद्धृत्वा पठनाद्ब्रह्मा सृष्टिं वितनुते ध्रुवम् ॥ यद्धृत्वा पठनात्पाति महालक्ष्मीर्जगत्त्रयम् ॥ ४ ॥ पठनाद्धारणाच्छंभुः संहर्ता सर्वतत्त्ववित् ॥ त्रैलोक्यजननी दुर्गा महिषादिमहासु-

रान् ॥ ५ ॥ चरद्दत्तान् जघानैव पठनाद्धारणाद्य-
तः ॥ एवमिंद्रादयः सर्वे सर्वैश्वर्यमवाप्नुयुः ॥ ६ ॥
शिष्याय विष्णुभक्ताय साधकाय प्रकाशयेत् ॥
शठाय परशिष्याय दत्वा मृत्युमवाप्नुयात् ॥ ७ ॥
त्रैलोक्यमंगलस्यास्य कवचस्य प्रजापतिः ॥ ऋ-
षिश्छंदस्तु गायत्री देवो नारायणः स्वयम् ॥ ८ ॥
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ॥ प्र-
णवो मे शिरः पातु नमो नारायणाय च ॥ ९ ॥ भालं
पायान्नेत्रयुग्ममष्टार्णो भुक्तिमुक्तिदः ॥ क्लीं पाया-
च्छ्रोत्रयुग्मं चैकाक्षरः सर्वमोहनः ॥ १० ॥ क्लीं

कृष्णाय सदा घ्राणं गोविंदायेति जिह्विकाम् ॥ गोपी-
जनपदं वल्लभाय स्वाहाननं मम ॥ ११ ॥ अष्टा-
दशाक्षरो मंत्रः कंठं पातु दशाक्षरः ॥ गोपीजनपदं
वल्लभाय स्वाहा भुजद्वयम् ॥ १२ ॥ क्लींग्लौंक्लीं
श्यामलांगाय नमः स्कंधौ दशाक्षरः ॥ क्लीं कृ-
ष्णाय करौ पातु क्लीं कृष्णायांगजोऽवतु ॥ १३ ॥
हृदयं श्रीं भुवनेशि क्लीं कृष्णाय स्तनौ मम ॥ गो-
पालायाग्निजाया मे कुक्षियुग्मं सदावतु ॥ १४ ॥
क्लीं कृष्णाय सदा पातु पार्श्वयुग्मं मनूत्तमः ॥ कृ-
ष्णगोविंदकौ पातु स्मराद्यो ङेयुतो मनुः ॥ १५ ॥

अष्टाक्षरः पातु नाभिं कृष्णेति द्व्यक्षरोऽवतु ॥ पृष्ठं
क्लीं कृष्णकं कालं क्लीं कृष्णाय द्विठांतकः ॥ १६ ॥
सक्थिनी सततं पातु श्रींह्रींक्लीं कृष्णठद्वयम् ॥ ऊरू
सप्ताक्षरः पातु त्रयोदशाक्षरोऽवतु ॥ १७ ॥ श्रीं-
ह्रींक्लीं दयतो गोपीजनवल्लपदं ततः ॥ भायस्वा-
हेति पायुं वै क्लींह्रींश्रीं स दशाक्षरः ॥ १८ ॥ जानु-
नी च सदा पातु ह्रींश्रींक्लीं च दशाक्षरः ॥ त्रयो-
दशाक्षरः पातु जंघे चक्रगदायुधः ॥ १९ ॥ अष्टा-
दशाक्षरो ह्रींश्रींपूर्वको विंशवर्णकः ॥ सर्वांगं मे
सदा पातु द्वारकानायको वली ॥ २० ॥ नमो भग-

वते पश्चाद्वासुदेवाय तत्परम् ॥ ताराद्यो द्वादशार्णो-
ऽयं प्राच्यां मां सर्वदावतु ॥ २१॥ श्रीं ह्रीं क्लीं यशवर्ण-
कः क्लीं ह्रीं श्रीं षोडशाक्षरः ॥ गदाद्युदायुधो विष्णुः
समेऽग्निदिशि रक्षतु ॥ २२ ॥ ह्रीं श्रीं दशाक्षरो मंत्रो
दक्षिणे मां सदावतु ॥ तारो नमो भगवते रुक्मिणी-
वल्लभाय च ॥२३॥ स्वाहेति षोडशार्णोऽयं नैर्ऋत्यां
दिशि रक्षतु ॥ क्लीं हृषीकेशायपदं नमो मां वारुणे-
ऽवतु ॥ २४ ॥ अष्टादशार्णः कामांतो वायव्ये मां
सदावतु ॥ श्रीं मायाकामकृष्णाय गोविंदाय द्विठो
मनुः ॥ २५ ॥ द्वादशार्णात्मको विष्णुरुत्तरे मां

सदावतु ॥ वाग्भवः कामकृष्णाय ह्रीं गोविंदाय ततः परम् ॥ २६ ॥ श्रीं गोपीजनवल्लभाय स्वाहासौ ततः परम् ॥ द्वात्रिंशदक्षरो मंत्रो मामैशान्ये सदावतु ॥ २७ ॥ कालियस्य फणामध्ये दिव्यं नृत्यं करोति तम् ॥ नमामि देवकीपुत्रं नृत्यमानं तमच्युतम् ॥२८॥ द्वात्रिंशदक्षरो मंत्रोऽप्यधो मां सर्वदावतु ॥ क्लीं कामदेवाय विद्महे पुष्पवाणाय धीमहि ॥ २९ ॥ तन्नोनंगः प्रचोदयात् एषा मां पातु चोर्ध्वतः ॥ इति ते कथितं विप्र सर्वमंत्रौघविग्रहम् ॥ ३० ॥ त्रैलोक्यमंगलं नाम कवचं ब्रह्मरूपिणम् ॥

ब्रह्मेशप्रमुखाधीशनारायणमुखाच्छ्रुतम् ॥ ३१ ॥ तव स्नेहान्मया ख्यातं प्रवक्तव्यं न कस्यचित् ॥ गुरुं प्रणम्य विधिवत्कवचं प्रपठेत्तु यः ॥ ३२ ॥ सकृद्द्विस्त्रिर्यथाज्ञानं सोऽपि सर्वतपोमयः ॥ मंत्रेषु सकलेष्वेव देशिको नात्र संशयः ॥ ३३ ॥ शतमष्टोत्तरं चापि पुरश्चर्याविधिः स्मृतः ॥ हवनादि दशांशेन कृत्वा तत्साधयेद्ध्रुवम् ॥ ३४ ॥ यदि स्यात्सिद्धकवचो सिद्धिरेव न संशयः ॥ मंत्रसिद्धिर्भवेत्तस्य पुरश्चर्यां विना ततः ॥ ३५ ॥ स्पर्धामुद्धूय सततं वाणीर्लक्ष्मीर्वसेत्ततः ॥ पुष्पांजल्यष्टकं

दत्वा मूलेनैव पठेत्सकृत् ॥ ३६ ॥ दशवर्षसहस्राणां
पूजायाः फलमाप्नुयात् ॥ भूर्जे विलिख्य गुटिकां
स्वर्णस्थां धारयेद्यदि ॥ ३७ ॥ गोरोचनाकुंकुमाभ्यां
कस्तूरीरक्तकैः पुनः ॥ कंठे वा दक्षिणे बाहौ सोऽपि
विष्णुर्न संशयः ॥ ३८ ॥ अश्वमेधसहस्राणि वा-
जपेयशतानि च ॥ महादानानि यान्येव प्रादक्षिण्यं
भुवस्तथा ॥ ३९ ॥ कलां नार्हंति तान्येव सकृदुच्चार-
णाद्यतः ॥ ४० ॥ कवचस्य प्रसादेन जीवन्मुक्तो
भवेन्नरः ॥ त्रैलोक्यं मोक्षयेदेव त्रैलोक्यविजयी
भवेत् ॥ ४१ ॥ इदं कवचमज्ञात्वा भजेद्यः पुरुषो-

त्तमम् ॥ शतलक्षं प्रजप्तोऽपि न मंत्रः सिद्धिदायकः ॥ ४२ ॥ इति श्रीसनत्कुमारतंत्रे त्रैलोक्यमंगलं नाम कवचं समाप्तम् ॥ ॥ अथ सहस्रनाम लिख्यते ॥ कैलासशिखरे रम्ये नानाद्रुमलताकुले ॥ नानापक्षिसमायुक्ते सिद्धचारणसेविते ॥ १ ॥ कल्पवृक्षमहोद्यानमंडिते समभूतले ॥ निविष्टं प्रणिपत्याह पार्वती प्राणवल्लभम् ॥ २ ॥ श्रीपार्वत्युवाच ॥ भगवन् देवदेवेश सृष्टिस्थित्यंतकारक ॥ योगियोगिमहायोगिपूज्यपादयुगांबुज ॥ ३ ॥ त्वमेव पूज्यसे लोकैर्ब्रह्मविष्णुसुरादिभिः ॥ नित्यं

पठसि देवेश कस्य स्तोत्रं महेश्वर ॥ ४ ॥ त्वत्तोऽधिकतरः को वा यमेवं समुपासते ॥ हर्षगद्गदया वाचा यन्नाम लीयसे मुहुः ॥ ५ ॥ आश्चर्यमिदमाख्यातं जायते मयि शंकर ॥ त्वं प्राणेश महाप्राज्ञ संशयं छिंधि शंकर ॥ ६ ॥ ॥ श्रीमहादेव उवाच ॥ धन्यासि कृतपुण्यासि पार्वति प्राणवल्लभे ॥ रहस्यातिरहस्यं च यत्पृच्छसि वरानने ॥ ७ ॥ तत्त्वं गोपितवानस्मि स्त्रीस्वभावादहं प्रिये ॥ स्त्रीस्वभावान्महादेवि पुनस्त्वं परिपृच्छसि ॥ ८ ॥ गोपनीयं गोपनीयं गोपनीयं प्रयत्नतः ॥ दत्ते च

सिद्धिहानिः स्यात् तस्माद्यत्नेन गोपयेत् ॥ ९ ॥
राज्यं देयं च सर्वस्वं स्वप्राणमपि सुंदरी ॥ न च
वाच्यं परं तत्त्वं गोपनीयं प्रयत्नतः ॥ १० ॥ इदं
रहस्यं परमं पुरुषार्थप्रदायकम् ॥ धनरत्नौघमाणि-
क्यतुरंगमगजादिकम् ॥ ११ ॥ ददाति स्मरणादेव
महामोक्षप्रदायकम् ॥ तस्य गोपालदेवस्य नाम्नां
साहस्रमुत्तमम् ॥ १२ ॥ स्मरामि सततं देवि हर्ष-
गद्गदया गिरा ॥ अवतारा महाविष्णोर्मत्स्यकूर्मा-
दयः कति ॥ १३ ॥ न तेषु देवदेवेशि पूर्णत्वं
सुरसुंदरि ॥ अवतारो ह्ययं साक्षात्पूर्णब्रह्मसनात-

नम् ॥ १४ ॥ वासुदेवाख्यममलं ब्रह्मादिभिरुपासितम् ॥ नैनं जानंति तत्त्वेन कर्ममूढा महर्षयः ॥ १५ ॥ नारदः कपिलाचार्यो वेदव्यासः सनातनः ॥ अहं ब्रह्मा शुकोऽत्रिश्च वसिष्ठश्च पराशरः ॥ १६ ॥ एते जानंति तत्त्वेन जपंति जगदीश्वरम् ॥ तद्रूपतां गता एते नामरूपक्रियादिभिः ॥ १७ ॥ तत्तेऽहं संप्रवक्ष्यामि शृणुष्वावहिता प्रिये ॥ योऽसौ निरंजनो देवश्चित्स्वरूपी जनार्दनः ॥ १८ ॥ संसारसागरोत्तीर्णकरणाय नृणां सदा ॥ श्रीगंगाद्रवरूपेण त्रैलोक्यं व्याप्य तिष्ठति ॥ १९ ॥ ततो

लोका महामूढा विष्णुभक्तिविवर्जिताः ॥ निश्चयं नाधिगच्छंति पुनर्नारायणो हरिः ॥ २० ॥ त्यक्त्वा नारायणं देवमादिभूतमकल्मषं ॥ केचित्त्वामपरे मां च भक्तियुक्ता उपासते ॥ २१ ॥ त्वत्तो मत्तश्च निखिलान्कामान्प्राप्य विमोहिताः ॥ अवजानंति ते मूढा नारायणमनामयम् ॥ २२ ॥ निरंजनो निराकारो भक्तानां प्रीतिकामतः ॥ वृंदावनविहाराय गोपालं रूपमुद्वहन् ॥ २३ ॥ मुरलीवादनाधारी राधायै प्रीतिमावहन् ॥ अंशांशेभ्यः समुन्मील्य पूर्णरूपकलायुतः ॥ २४ ॥ श्रीकृष्णचंद्रो भगवान्नंदगोपव-

रोचतः ॥ धरणीरूपिणी माता यशोदाऽऽनंददायिनी ॥ २५ ॥ देवकीवसुदेवाभ्यां ध्यातस्ताभ्यां वशीकृतः ॥ द्वाभ्यां प्रयाचितो नाथो देवक्यां वसुदेवतः ॥ २६ ॥ ब्रह्मणाभ्यर्थितो देवो देवैरपि सुरेश्वरि ॥ देवैर्विज्ञप्त ईशानो भूमिमंडलमंडितः ॥ २७ ॥ जातो भूभारमुद्धर्तुं पूर्णरूपकलाकुलः ॥ जातोऽवन्यामपि नुतो मुरली वेदरेचिका ॥ २८ ॥ तया सार्धं वचः कृत्वा ततो जातो महीतले ॥ संसारसारसर्वस्वं श्यामलं महदुज्ज्वलम् ॥ २९ ॥ एतज्ज्योतिरहं वंद्यं चिंतयामि सनातनम् ॥ एतत्प्रभावात्स॰

फलं ब्रह्मांडं मद्दशे शिवे ॥ ३० ॥ गौरतेजो विना
यस्तु श्यामतेजः समर्चयेत् ॥ जपेद्वा ध्यायते वापि
स भवेत्पातकी शिवे ॥ ३१ ॥ स ब्रह्महा सुरापी
च स्वर्णस्तेयी च पंचमः ॥ एतैर्दोषैर्विशिष्येत तेजो-
भेदान्महेश्वरि ॥ ३२ ॥ तस्माज्ज्योतिरभूद्द्वेधा रा-
धामाधवरूपकम् ॥ तस्मादहं महादेवि गोपालेनैव
भाषितम् ॥ ३३ ॥ दुर्वाससो मुनेर्मोहे कार्तिक्यां रा-
समंडले ॥ ततः पृष्टवती राधा संदेहं भेदमात्मनः
॥ ३४ ॥ निरंजनात्समुत्पन्नं मयाधीतं जगन्मयम् ॥
श्रीकृष्णेन ततः प्रोक्तं राधायै नारदाय च ॥ ३५ ॥

ततो नारदतः सर्वे विरला वैष्णवास्तथा ॥ कलौ
जानंति देवेशि गोपनीयं त्वया सदा ॥ ३६ ॥
शठाय कृपणायाथ दांभिकाय सुरेश्वरि ॥ न देयं
परशिष्याय दत्त्वा मृत्युमवाप्नुयात् ॥ ३७ ॥ तत्ते
गोपालदेवस्य नाम्नां साहस्रमुत्तमम् ॥ प्रवक्ष्यामि
सुरेशानि श्रोतुं योग्यासि सुंदरि ॥ ३८ ॥ त्वया
कुत्रापि नो वाच्यं गोपनीयं स्वयोनिवत् ॥ रहस्या-
तिरहस्यं मे प्राणादपि सुलोचने ॥३९॥ ब्रह्महत्या-
मवाप्नोति तस्माद्यत्नेन गोपयेत् ॥ ४० ॥ ॐ अस्य
श्रीगोपालसहस्रनामस्तोत्रमंत्रस्य ॥ श्रीसदाशिव

ऋषिः ॥ अनुष्टुप् छंदः ॥ श्रीगोपालो देवता ॥ कामो वीजं ॥ माया शक्तिः ॥ चंद्रः कीकलं ॥ श्रीकृष्णचंद्रभक्तिजन्यफलप्राप्तये श्रीगोपालसहस्त्रनामजपे विनियोगः ॥ अथ ध्यानम् ॥ फुल्लेंदीवरकांतिमिंदुवदनं वर्हावतंसप्रियं श्रीवत्सांकमुदारकौस्तुभधरं पीतांवरं सुंदरम् ॥ गोपीनां नयनोत्पलार्चिततनुं गोगोपसंघावृतं गोविंदं कलवेणुवादनपरं दिव्यांगभूषं भजे ॥ ४१ ॥ ॐ क्लीं देवः कामदेवश्च कामवीजशिरोमणिः ॥ श्रीकृष्णः कृष्णचरितो लीलाविग्रहधारकः ॥ ४२ ॥ धरणीपालको धन्यो

धनधान्यप्रवर्तकः ॥ गोविंदो गोकुलाचार्यो गोपी-
गोपमनोहरः ॥ ४३ ॥ गोवत्सपालकः स्वामी
गोपालो गोपिपालकः ॥ गोपीजनानंदकरो वह्नि-
जायानिषेवितः ॥ ४४ ॥ गजगामी गुरुर्गोप्ता
मायागंगादितीर्थसूः ॥ गंगागगनसंचारी गणेशा-
दिसुरस्तुतः ॥ ४५ ॥ गिरीशप्रणतो गौरीप्राणे-
शहृदये स्थितः ॥ गदाधरो गदहरो गोपीनां
जीवनौषधिः ॥ ४६ ॥ ग्रस्तसूर्येंदुसंत्रस्तो गोमायु-
कृतरक्षणः ॥ गरुडासनसंजातशर्मा गरुडसेवितः
॥४७॥ गंगादितीर्थरसिको ग्रामणीर्ग्रामदायकः ॥

गाधीकृतजगत्सिंधुर्गोत्रशत्रुनिषेवितः ॥ ४८ ॥
गोवर्धनधरो गोपकन्यावस्त्रापहारकः ॥ गोप्यो
गोपपतिर्गोप्ता गोपीपालनतत्परः ॥ ४९ ॥ गतमा-
योऽगाधबुद्धिर्गात्रसौंदर्यमंडितः ॥ गजेंद्रमोक्षदो
ग्राहस्वर्गदोऽलककौस्तुभः ॥५०॥ गांधर्वगानरसि-
को गायत्रीजपतत्परः ॥ गंगासत्कारसंतुष्टो गांगे-
यपरिपालकः ॥५१॥ ग्रंथज्ञो ग्रंथभेत्ता च गलकौ-
स्तुभभूषणः ॥ कृपाकरः कलानाथः कामिनीमद-
भंजनः ॥ ५२ ॥ कोटिकंदर्पलावण्यकमलाकर-
लालितः ॥ कीर्तिविस्फुरिताशेषकुकुरांधकसेवितः

तशोमिमुखांबुजः ॥ किरातवेषो मतेद्रसेवितः कल्पतरुद्रुः ॥ ६४ ॥ हरिर्हरिप्रियो हंससारो हापितासुरः ॥ हलायुधानुजो हेलारसको हतम- ॥ ६५ ॥ हरिणीलोचनो हंसो बाहुपुज्यो हंस- स्मुखः ॥ हंसगोवानभोक्ता च हतसुभुक्वतर्पितः ॥ ॥ ६६ ॥ हतसंसारदुर्वासोर्हतकिद्रजयापितामृ ॥ हीनदोषो हंसरूपो हतारिर्हरपूजितः ॥ ६७ ॥ हत्याकोटिहरो हर्षो हंकारनिहतासुरः ॥ हालापान- प्रियो हालाहालो भक्तपराञ्जुखः ॥ ६८ ॥ व्रजस्त्री- नयनानंदो व्रजस्त्रीजनजीवनः ॥ व्रजस्त्रीगीतस-

त्कीर्तिर्व्रजस्त्रीपरिपालकः ॥ ६९ ॥ व्रजस्त्रीनयनानं-
दश्चंद्रमा नंदनंदनः ॥ व्रजस्त्रीतपसां भर्ता व्रज-
स्त्रीभोगलालसः ॥ ७० ॥ व्रजस्त्रीरासरसिको व्रज-
स्त्रीकुहकप्रदः ॥ व्रजस्त्रीभाग्यभूमीशो व्रजस्त्रीज-
नरक्षकः ॥ ७१ ॥ वृंदावनेंदुरानंदो नंदग्रामकृताल-
यः ॥ वनोपवनहेलायुग् गोवर्धनविहारभूः ॥ ७२ ॥
वृंदावनकृतावासो वृंदावननिषेवितः ॥ वृंदाव-
नकदंबेषु लास्यलीलाविनोदवान् ॥ ७३ ॥ वृषभा-
नुसुतास्वामी वृषभानुसुतार्चितः ॥ वृषभानुसुता-
भाग्यं वृषभानुसुताप्रियः ॥ ७४ ॥ राधिकालालि-

तपदो राधिकाकेलिलंपटः ॥ राधिकारतिसर्वस्वं
राधिकाश्यामसुंदरः ॥ ७५ ॥ राधिकारासर-
सिको राधारमणतत्परः ॥ राधाकुंडकृतस्नानो रा-
धाकेलिकृतोत्सवः ॥ ७६ ॥ राधोत्संगनिषण्णांगो
राधाहस्तोपजीवितः ॥ राधिकाकृतसंकेतो रा-
धामानविवर्धनः ॥ ७७ ॥ दानलीलामानलीला-
मंडनो व्रजयोपिताम् ॥ यशोदालालितो देवो
यशोदामानसोत्सवः ॥ ७८ ॥ यशोदापोषितः
श्रीदो यशोदासुखभाजनम् ॥ दधिदुग्धहरश्चौ-
र्यशंकितः पुष्करेक्षणः ॥ ७९ ॥ गोपीभिर्हसि-

तश्चौर्ये गोपीभिः कृतहेलनः ॥ वेणुवादित्रवा-
न्वेद्यो मुरलीवाद्यतत्परः ॥ ८० ॥ मोदमानवपु-
र्मानी माननीयो महीभृताम् ॥ मनोहरो महीभ-
र्ता महामोहनिवारकः ॥ ८१ ॥ मितभाषी मिता-
हारी मीनचंचललोचनः ॥ मधुपानकृतां द्रष्टा म-
धुपानकृदीश्वरः ॥ ८२ ॥ मधुक्रीडापरो मुग्धो म-
धुदैत्यनिषूदनः ॥ मथुरावनितामोही मथुरास्त्रीपु-
रंदरः ॥ ८३ ॥ मुग्धसुंदरगात्रश्रीर्मंदिरांगच्छविः
प्रभुः ॥ प्रेमहर्षमयूराणां लास्यलीलाविनोदकृत्
॥ ८४ ॥ श्रीगोपालो महीपालः सर्ववेदांगपारगः ॥

कृष्णः कमलपत्राक्षः पुंडरीकः सनातनः ॥ ८५ ॥
गोपतिर्भूपतिः शास्ता प्रहर्ता विश्वतोमुखः ॥ आ-
दिकर्ता महाभर्ता महाकालः प्रतापवान् ॥ ८६ ॥
जगज्जीवो जगद्धाता जगद्भर्ता जगद्वसुः ॥ मत्स्यो
भीमः कुहूभर्ता हर्ता वाराहमूर्तिमान् ॥ ८७ ॥
नारायणो हृषीकेशो गोविंदो गरुडध्वजः ॥ गोकुलें-
द्रो महाचंद्रः शर्वरीप्रियकारकः ॥ ८८ ॥ कम-
लामुखलोलाक्षः पुंडरीकः शुभावहः ॥ दुर्वासाः
कपिलो भौमः सिंधुसागरसंगमः ॥ ८९ ॥ गोविंदो
गोपतिर्गोत्रं कालिंदीप्रेमपूरकः ॥ गोस्वामी गो-

कुलेंद्रेशो गोवर्धनवरप्रदः ॥ ९० ॥ नंदादिगोकुलत्राता दाता दारिद्र्यभंजनः ॥ सर्वमंगलदाता च सर्वकामप्रदायकः ॥ ९१ ॥ आदिकर्ता महीभर्ता सर्वनागरसिंधुजः ॥ गजगामी गजोद्धारी कामी कामकलानिधिः ॥ ९२ ॥ कलंकरहितश्चंद्रो विंबोष्ठो विंवसत्तमः ॥ मालाकारकृपाकारः कोकिलस्वरभूषणः ॥ ९३ ॥ रामो लीलांबरो देवो हली दुर्मदमर्दनः ॥ सहस्राक्षपुरीभेत्ता महामारीविनाशनः ॥ ९४ ॥ शिवः शिवतमो भेत्ता वलारातिप्रपूजकः ॥ कुमारीवरदायी च वरेण्यो मीनकेतनः

॥ ९५ ॥ नरो नारायणो धीरो धीरापतिरुदार-
धीः ॥ श्रीपतिः श्रीनिधिः श्रीमान्मापतिः पतिरा-
जहा ॥ ९६ ॥ वृंदापतिः कुलग्रामी धामब्रह्मसनात-
नः ॥ रेवतीरमणो रामः प्रियश्चंचललोचनः ॥ ९७ ॥
रामायणशरीरोऽयं रामी रामः श्रियः पतिः ॥ शर्वरः
शर्वरी शर्वः सर्वत्र शुभदायकः ॥ ९८ ॥ राधाराधयि-
तो राधी राधाचित्तप्रमोदकः ॥ राधारतिसुखोपेतो
राधामोहनतत्परः ॥ ९९ ॥ राधावशीकरो राधा-
हृदयांभोजषट्पदः ॥ राधालिंगनसंमोदो राधान-
र्तनकौतुकः ॥ १०० ॥ राधासंजातसंप्रीतो राधा-

काम्यफलप्रदः ॥ वृंदापतिः कोशनिधिः कोकशो-
कविनाशनः ॥ १ ॥ चंद्रापतिश्चंद्रपतिश्चंडकोदं-
डभंजनः ॥ रामो दाशरथी रामो भृगुवंशसमुद्भवः
॥ २ ॥ आत्मारामो जितक्रोधो मोहो मोहांधभं-
जनः ॥ वृषभानुभवो भावी काश्यपिः करुणानिधिः
॥ ३ ॥ कोलाहलो हली हालो हाली हलधरप्रियः ॥
राधामुखाब्जमार्तंडो भास्करो रविजो विधुः ॥ ४ ॥
विधिर्विधाता वरुणो वारुणो वारुणीप्रियः ॥ रो-
हिणीहृदयानंदी वसुदेवात्मजो वली ॥ ५ ॥ नी-
लांबरो रौहिणेयो जरासंधवधोद्यतः ॥ नागो

नवांभो विरदो विरहो वरदो वली ॥ ६ ॥ गोपथो
विजयी विद्वान् शिपिविष्टः सनातनः ॥ परशुराम-
वचोग्राही वरग्राही शृगालहा ॥ ७ ॥ दमघोषोपदे-
ष्टा च रथग्राही सुदर्शनः ॥ वीरपत्नीयशस्त्राता
जराव्याधिविघातकः ॥ ८ ॥ द्वारकावासतत्त्वज्ञो
हुताशनवरप्रदः ॥ यमुनावेगसंहारी नीलांबरधरः
प्रभुः ॥ ९ ॥ विभुः शरासनो धन्वी गणेशो
गणनायकः ॥ लक्ष्मणो लक्षणो लक्षो रक्षोवंशवि-
नाशनः ॥ ११० ॥ वामनो वामनीभूतो वलिजिद्वि-
क्रमत्रयः ॥ यशोदानंदकर्ता च यमलार्जुनमुक्तिदः

॥ ११ ॥ उलूखली महामानो दामोदरदयापरः ॥
भक्तानुकारी भगवान् केशवो वलधारकः ॥ १२ ॥
केशिहा मधुहा मोही वृषासुरविघातकः ॥ अघा-
सुरविनाशी च पूतनामोक्षदायकः ॥ १३ ॥ कुब्जा-
विनोदी कुब्जांगसमीकरणतत्परः ॥ अश्वमेधो वा-
जपेयो गोमेधो नरमेधवान् ॥ १४ ॥ कंदर्पकोटि-
लावण्यश्चंद्रकोटिसुशीतलः ॥ रविकोटिप्रतीकाशो
वायुकोटिसुशीतलः ॥ १५ ॥ ब्रह्मा ब्रह्मांडकर्ता च
कमलावांछितप्रदः ॥ कमली कमलाक्षश्च कमला-
मुखलोलुपः ॥ १६ ॥ कमलाव्रतधारी च कमला-

क्षः पुरंदरः ॥ सौभाग्याधिकचित्तोऽयं महामायी महोत्कटः ॥ १७ ॥ तारकारिः सुरत्राता मारीचक्षोभकारकः ॥ विश्वामित्रप्रियो दांतो रामो राजीवलोचनः ॥ १८ ॥ लंकाधिपकुलध्वंसी विभीषणवरप्रदः ॥ सीतानंदकरो रामो वीरो वारिधिबंधकः ॥१९॥ चंद्रावलीपतिः कूलः केशी कंसवधोऽमलः ॥ माधवो मधुहा माध्वीपानकृन्नरकप्रदः ॥ १२० ॥ मुंजाटवीगाहमानो धेनुकारिर्धरात्मजः ॥ वंशीवटविहारी च गोवर्धनवनाश्रयः ॥ २१ ॥ तथा तालवनोद्देशी भांडीरवनशंकहा ॥ तृणावर्तकृपाकारी

वृषभानुसुतापतिः ॥ २२ ॥ राधाप्राणसमो राधा-
वदनाब्जमधुव्रतः ॥ गोपीरंजनदैवज्ञो लीलाकम-
लपूजितः ॥ २३ ॥ क्रीडाकमलसंदोहो गोपिका-
प्रीतिरंजनः ॥ रंजको रंजनो रंगो रंगी रंगमहीरुहः
॥२४॥ कामः कामारिभक्तोऽयं पुराणपुरुषः कविः ॥
नारदो देवलो भीमो वालो वालमुखांबुजी ॥ २५ ॥
अंबुजो ब्रह्मसाक्षी च योगी दत्तवरो मुनिः ॥
ऋषभः पर्वतो ग्रामो नदीपवनवल्लभः ॥ २६ ॥
पद्मनाभः सुरज्येष्ठो ब्रह्मा रुद्रोऽहिभूषितः ॥
गणानां त्राणकर्ता च गणेशो ग्रहिलो ग्रही

॥ २७ ॥ गुणाश्रयो गुणक्रोधी क्रोडीकृतजगत्र-
यः ॥ यादवेंद्रो द्वारकेंद्रो मथुरावल्लभो धुरी ॥ २८॥
भ्रमद्भ्रमरलीलाभकुंतलः कुलभूषणः ॥ कुंतीसुत-
प्राणरक्षी कुंतीसुतवरप्रदः ॥ २९ ॥ सुभद्राग्रहणो-
द्युक्तधनंजयनियोजकः ॥ द्रौपदीदैवतं दाता दुर्वा-
सस्तृप्तिकारकः ॥ १३० ॥ यमुनावरदाता च कश्य-
पस्य वरप्रदः ॥ शंखचूडवधोद्दामी गोपीरक्षणत-
त्परः ॥ ३१ ॥ पांचजन्यकरो रामी त्रिरामी वनजो
जयः ॥ सांदीपनसुतादानसंजातगुरुदक्षिणः ॥ ३२ ॥
चतुःषष्टिकलाभिज्ञो मुचुकुंदवरप्रदः ॥ फाल्गुनः

फाल्गुनसखा विराधवधकारकः ॥ ३३ ॥ रुक्मिणीप्राणनाथश्च सत्यभामाप्रियंकरः ॥ सत्याजांबवतीभर्ता लक्ष्मणानंदकंदकः ॥ ३४ ॥ कृतनाग्नजितीकामो मित्रविंदासुखप्रदः ॥ कल्पवृक्षो महावृक्षो दानवृक्षो महाफलः ॥ ३५ ॥ अंकुशो भूसुरो भावो भामको भ्रामको हरिः ॥ सरलः शाश्वतो धीरो यदुवंशी शिवात्मकः ॥ ३६ ॥ प्रद्युम्नवलकर्ता च प्रहर्ता दैत्यहा प्रभुः ॥ महाधनो महावीरो वनमालाविभूषणः ॥ ३७ ॥ तुलसीदामसौभाग्यो जालंधरविनाशनः ॥ शूरः सूर्यो मृतंडश्च भास्करो

विश्वपूजितः ॥ ३८ ॥ रविस्तमोहा वह्निश्च वाडवो
वडवानलः ॥ दैत्यदर्पविनाशी च गरुडो गरुडा-
ग्रजः ॥ ३९ ॥ गोपीनाथो महानाथो वृंदानाथ-
विरोधकः ॥ प्रपंची पंचरूपश्च लतागुल्मश्च गो-
पतिः ॥ १४० ॥ गंगा च यमुनारूपो गोदा वेत्रवती
तथा ॥ कावेरी नर्मदा तापी गंडकी सरयूरजः ॥४१॥
राजसस्तामसः सत्त्वी सर्वांगी सर्वलोचनः ॥ मुदा-
मयोऽमृतमयो योगिनीवल्लभः शिवः ॥ ४२ ॥ बुद्धो
बुद्धिमतां श्रेष्ठो विष्णुर्जिष्णुः शचीपतिः ॥ वंशी
वंशधरो लोको विलोको मोहनाशनः ॥ ४३ ॥ रवरा-

वो रवो रावो बालो बाल्यवलांतकः ॥ शिवो रुद्रो नलो नीलो लांगली लांगलाश्रयः ॥ ४४ ॥ पारदः पावनो हंसो हंसारूढो जगत्पतिः ॥ मोहनीमोहनो माया महामायी महामखी ॥ ४५ ॥ वृषो वृषाकपिः कालः कालीदमनकारकः ॥ कुब्जाभाग्यप्रदो वीरो रजकक्षयकारकः ॥ ४६ ॥ कोमलो वारुणो राजा जलजो जलधारकः ॥ हारकः सर्वपापघ्नः परमेष्ठी पितामहः ॥ ४७ ॥ खड्गधारी कृपाकारी राधारमणसुंदरः ॥ द्वादशारण्यसंभोगी शेषनागफणालयः ॥ ४८ ॥ कामः श्यामः सुखः श्रीदः श्रीहः

श्रीदः पतिः कृतिः ॥ हरिर्हरो नरो नारो नरोत्तम
इषुप्रियः ॥ ४९ ॥ गोपालीचित्तहर्ता च कर्ता
संसारतारकः ॥ आदिदेवो महादेवो गौरीगुरुर-
माश्रयः ॥१५०॥ साधुर्माधुर्विधुर्धाता त्राता क्रूरप-
रायणः ॥ रोलंवी च हयग्रीवो वानरारिर्वनाश्रयः
॥५१॥ वनं वनी वलाध्यक्षो महावंधो महामुनिः ॥
स्यमंतकमणी प्राज्ञो विज्ञो विघ्नविघातकः ॥ ५२ ॥
गोवर्धनो वर्धनीयो वर्धनीवर्धनप्रियः ॥ वार्धन्यो
वर्धनो वर्धी वर्धनः ससुखप्रियः ॥ ५३ ॥ गोपाल-
रमणीभर्ता सांवकुष्ठविनाशकः ॥ वर्धितो वृद्धको

वृद्धो वृंदारकजनप्रियः ॥ ५४ ॥ रुक्मिणीहरण-
प्रेमा प्रेमी चंद्रावली पतिः ॥ श्रीकर्ता विश्वभर्ता
च नारायणनरो बली ॥ ५५ ॥ गणो गणप-
तिश्चैव दत्तात्रेयो महामुनिः ॥ व्यासो नारायणो
दिव्यो भव्यो भावुकधारकः ॥ ५६ ॥ स्वश्रेयसं
शिवं भद्रं भावुकं भविकं शुभम् ॥ शुभात्मकः शुभः
शास्ता प्रशास्ता मेघनादहा ॥ ५७ ॥ ब्रह्मण्यदेवो
दीनानामुद्धारकरणक्षमः ॥ कृष्णः कमलपत्राक्षः
कृष्णः कमललोचनः ॥ ५८ ॥ कृष्णः कामी सदा-
कृष्णः समस्तप्रियकारकः ॥ नंदो नंदी महानादी

मादी मादनकः किली ॥ ५९ ॥ मिलीहिली गिलीगो-
ली गोलो गोलालयो गुली ॥ गुगुली मारकी शाखी
वटः पिप्पलकः कृती ॥ ६० ॥ म्लेच्छहा कालकर्ता
च यशोदायश एव च ॥ अच्युतः केशवो विष्णु-
र्हरिः सत्यो जनार्दनः ॥ ६१ ॥ हंसो नारायणो
नीलो लीनो भक्तिपरायणः ॥ जानकीवल्लभो रामो
विरामो विघ्ननाशनः ॥ ६२ ॥ सहस्रभानुर्महाभानु-
र्वीरभानुर्महोदधिः ॥ समुद्रोऽब्धिरकूपारः पारावारः
सरित्पतिः ॥ ६३ ॥ गोकुलानंदकारी च प्रतिज्ञा-
परिपालकः ॥ सदारामः कृपारामो महारामो धनु-

धरः ॥ ६४ ॥ पर्वतः पर्वताकारो गयो गेयो द्विज-
प्रियः ॥ कमलाश्वतरो रामो रामायणप्रवर्तकः
॥ ६५ ॥ द्यौर्दिवो दिवसो दिव्यो भव्यो भावी
भयापहः ॥ पार्वतीभाग्यसहितो भर्त्ता लक्ष्मीवि-
लासवान् ॥ ६६ ॥ विलासी साहसी सर्वी गर्वी
गर्वितलोचनः ॥ मुरारिर्लोकधर्मज्ञो जीवनो जीव-
नांतकः ॥ ६७ ॥ यमो यमारिर्यमनो यामी याम-
विधायकः ॥ वंशुली पांशुली पांशुः पांडुरर्जुनव-
ल्लभः ॥ ६८ ॥ ललिता चंद्रिकामाली माली मालां-
बुजाश्रयः ॥ अंबुजाक्षो महायज्ञो दक्षश्चिंतामणिः

तमजः ॥ नंदगोपकुमारार्यो नवनीताशनो विभुः ॥ ८० ॥ पुराणः पुरुषः श्रेष्ठः शंखपाणिः सुविक्रमः ॥ अनिरुद्धश्चक्ररथः शार्ङ्गपाणिश्चतुर्भुजः ॥ ८१ ॥ गदाधरः सुरार्तिघ्नो गोविंदो नंदकायुधः ॥ वृंदावनचरः शौरिर्वेणुवाद्यविशारदः ॥ ८२ ॥ तृणावर्तांतको भीमः साहसो बहुविक्रमः ॥ शकटासुरसंहारी बकासुरविनाशनः ॥ ८३ ॥ धेनुकासुरसंघातः पूतनारिर्नृकेसरी ॥ पितामहो गुरुः साक्षी प्रत्यगात्मा सदाशिवः ॥ ८४ ॥ अप्रमेयः प्रभुः प्राज्ञोऽप्रतर्क्यः स्वप्नवर्धनः ॥ धन्यो मान्यो भवो भावो

धीरः शांतो जगद्गुरुः ॥ ८५ ॥ अंतर्यामी-
श्वरो दिव्यो दैवज्ञो देवसंस्तुतः ॥ क्षीराब्धिशय-
नो धाता लक्ष्मीवान् लक्ष्मणाग्रजः ॥ ८६ ॥ धा-
त्रीपतिरमेयात्मा चंद्रशेखरपूजितः ॥ लोकसाक्षी
जगच्चक्षुः पुण्यचारित्रकीर्तनः ॥ ८७ ॥ कोटिमन्मथ-
सौंदर्यो जगन्मोहनविग्रहः ॥ मंदस्मिताननो गोपो
गोपिकापरिवेष्टितः ॥ ८८ ॥ फुल्लारविंदनयनश्चाणू-
रांध्रनिषूदनः ॥ इंदीवरदलश्यामो बर्हिबर्हावतंस-
कः ॥ ८९ ॥ मुरलीनिनदाह्लादो दिव्यमालांबरा-
वृतः ॥ सुकपोलयुगः सुभ्रूयुगलः सुललाटकः

॥ ९० ॥ कंबुग्रीवो विशालाक्षो लक्ष्मीवान् शुभलक्षणः ॥ पीनवक्षाश्चतुर्बाहुश्चतुर्मूर्तिस्त्रिविक्रमः ॥९१॥ कलंकरहितः शुद्धो दुष्टशत्रुनिबर्हणः ॥ किरीटकुंडलधरः कटकांगदमंडितः ॥ ९२ ॥ मुद्रिकाभरणोपेतः कटिसूत्रविराजितः ॥ मंजीररंजितपदः सर्वाभरणभूषितः ॥ ९३ ॥ विन्यस्तपादयुगलो दिव्यमंगलविग्रहः ॥ गोपिकानयनानंदः पूर्णचंद्रनिभाननः ॥ ९४ ॥ समस्तजगदानंदः सुंदरो लोकनंदनः ॥ यमुनातीरसंचारी राधामन्मथवैभवः ॥ ९५ ॥ गोपनारीप्रियो दांतो गोपीवस्त्रापहारकः ॥

शृंगारमूर्तिः श्रीधामा तारको मूलकारणम् ॥ ९६ ॥
सृष्टिसंरक्षणोपायः क्रूरासुरविभंजनः ॥ नरकासुर-
संहारी मुरारिर्वैरिमर्दनः ॥ ९७ ॥ आदितेयप्रियो
दैत्यभीकरो यदुशेखरः ॥ जरासंधकुलध्वंसी कं-
साराति: सुविक्रमः ॥ ९८ ॥ पुण्यश्लोकः कीर्तनीयो
यादवेंद्रो जगन्नुतः ॥ रुक्मिणीरमणः सत्यभामा-
जांबवतीप्रियः ॥ ९९ ॥ मित्रविंदानाग्नजितील-
क्ष्मणासमुपासितः ॥ सुधाकरकुले जातोऽनंतः प्रब-
लविक्रमः ॥ २०० ॥ सर्वसौभाग्यसंपन्नो द्वारकाप-
त्तनस्थितः ॥ भद्रासूर्यसुतानाथो लीलामानुषवि-

ग्रहः ॥ १ ॥ सहस्रषोडशस्त्रीशो भोगमोक्षैकदाय-
कः ॥ वेदांतवेद्यसंवेद्यो वैद्यो ब्रह्मांडनायकः ॥ २ ॥
गोवर्धनधरो नाथः सर्वजीवदयापरः ॥ मूर्तिमान्
सर्वभूतात्मा आर्तत्राणपरायणः ॥ ३ ॥ सर्वज्ञः
सर्वसुलभः सर्वशास्त्रविशारदः ॥ षड्गुणैश्वर्यसंप-
न्नः पूर्णकामो धुरंधरः ॥ ४ ॥ महानुभावः कैव-
ल्यदायको लोकनायकः ॥ आदिमध्यांतरहितः
शुद्धसात्विकविग्रहः ॥ ५ ॥ अंशुमानसमस्तात्मा
शरणागतवत्सलः ॥ उत्पत्तिस्थितिसंहारकारणं
सर्वकारणम् ॥ ६ ॥ गंभीरः सर्वभावज्ञः सच्चिदानं-

द्वियहः ॥ विष्वक्सेनः सत्यसंधः सत्यवाक्सत्यवि-
क्रमः ॥ ७ ॥ सत्यव्रतः सत्यसंज्ञः सत्यधर्मपराय-
णः ॥ आपन्नार्तिप्रशमनो द्रौपदीमानरक्षकः ॥ ८ ॥
कंदर्पजनकः प्राज्ञो जगन्नाटकवैभवः ॥ भक्तवश्यो
गुणातीतः सर्वैश्वर्यप्रदायकः ॥ ९ ॥ दमघोपसु-
तद्वेपी बाणबाहुविखंडनः ॥ भीष्मभक्तिप्रदो दि-
व्यः कौरवान्वयनाशनः ॥ १० ॥ कौंतेयप्रियबंधुश्च
पार्थस्यंदनसारथी ॥ नारसिंहो महावीरः स्तंभ-
जातो महाबलः ॥ ११ ॥ प्रह्लादवरदः सत्यो देव-
पूज्यो भयंकरः उपेंद्र इंद्रावरजो वामनो बलिबंध-

हितकारकः ॥ बालक्रीडासमासक्तो नवनीतस्य तस्करः ॥ २३ ॥ गोपालकामिनीजारश्चौरजारशिखामणिः ॥ परंज्योतिः पराकाशः परवासपरिस्फुटः २४ ॥ अष्टादशाक्षरो मंत्रो व्यापको लोकपावनः ॥ सप्तकोटिमहामंत्रशेखरो देवशेखरः ॥ २५ ॥ विज्ञानज्ञानसंधानस्तेजोराशिर्जगत्पतिः ॥ भक्तलोकप्रसन्नात्मा भक्तमंदारविग्रहः ॥ २६ ॥ भक्तदारिद्र्यदमनो भक्तानां प्रीतिदायकः ॥ भक्ताधीनमनाः पूज्यो भक्तलोकशिवंकरः ॥ २७ ॥ भक्ताभीष्टप्रदः सर्वभक्ताघौघनिकृंतनः ॥ अपारकरुणा-

सिंधुर्भगवान् भक्ततत्परः ॥ २८ ॥ वृंदारकजन-
श्लाघी कालिंदीजलपावनः ॥ ब्रह्मण्यदेवो देवेशो
दत्तात्रेयो दिवस्पतिः ॥ २९ ॥ वेदव्यासः शुभा-
चारो जनकज्ञानदायकः ॥ वाराहः पुंडरीकाक्षो
हिरण्याक्षविदारकः ॥ ३० ॥ नृसिंहः सिंहविक्रांतः
कृतप्रह्लादरक्षणः ॥ हिरण्यकशिपूत्पाटकेलिल-
क्ष्मीलताञ्चितः ॥ ३१ ॥ ब्रह्मादिदेवतावृंदगाय-
त्रीजपतत्परः ॥ बालकेलिर्बाललीलामोहिताशेष-
भूपतिः ॥ ३२ ॥ प्रातःस्मरणसंयुक्तो नित्यस्नान-
विधिप्लुतः ॥ कामगायत्रिकापूतः कामगायत्रिस-

स्कृतः ॥ ३३ ॥ गायत्रीजपनिष्ठानां मनोरथवरप्र-
दः ॥ जगद्वशीकरणभूर्जगदानंदकंदलः ॥ ३४ ॥
मंत्रशास्त्रप्रियो मोही मंत्रशास्त्रविशारदः ॥ मंत्र-
शास्त्रैकनिलयो मंत्रशास्त्रफलप्रदः ॥ ३५ ॥ मंत्र-
शास्त्रक्रियादक्षो मंत्रशास्त्रनिषेवितः ॥ मंत्रशास्त्र-
गुणोन्मादी श्रीविद्यादिसुखास्पदः ॥ ३६ ॥ गोपाल-
सुंदरीप्राणो नृसिंहः सुंदरीस्तुतः ॥ दिग्बंधमंत्रर-
चितो भूतशुद्धिविशारदः ॥ ३७॥ कृतप्राणप्रतिष्ठां-
गो मातृकान्याससत्परः केशवादिकृतन्यासो मू-
लमंत्रपुरस्कृतः ॥३८॥ अंआंइंईं कृताटोप उंऊंऋं

ॠतथैवच ॥ ऌंॡंचस्वरसंदोह एंऐंबीजकृता-
स्पदः ॥ ओंऔंअंअःपूज्यपदः षोडशस्वरमंडितः
॥ ३९ ॥ कंखंगंघंङमीशानश्चंछंजंझंञमीश्वरः ॥
टंठंडंढंणमानंदी तंथंदंधंनमावृतः ॥ ४० ॥ पंफंबं-
भंममाधारो यंरंलंवंसवत्सलः ॥ शंषंसंहंप्रजा-
नाथो ळंक्षंश्रीमातृकामयः ॥४१॥ मातृकामालया
जाप्योभूतलिप्यापुटीकृतः ॥ सुप्तप्रबोधसंस्कारो
रसिको रससागरः ॥ ४२ ॥ ग्लौंबीजवेदिताग्लौं-
ग्लौं गण्यो गणपतिप्रियः ॥ धंधंधनेशो धनदो
धरानायकपूजितः ॥ ४३ ॥ द्रांद्रींक्लींक्लंसः पंचवा-

 



णेशोज्झखसैंगुरूत्तमः ॥ हसक्षमलवरयूंगुरुपूजा-
परायणः ॥ ४४ ॥ गांगींगूंगैंचगोंगः श्रीगंगादि-
कृतपूजनः ॥ रांरींरूंरंच रौंरः श्रीहुताशनवरप्रदः
॥४५॥ लांलींलूंलैंच लौंलः श्रीभूभारोद्धारणक्षमः ॥
वांवींवूंवैं च वौंवः श्रीपयसामादिभूर्विभुः ॥ ४६ ॥
यांयींयूंयैं च यौंयः श्रीवायुवृंदनिषेवितः ॥ ह्रांह्रीं-
ह्रूंह्रैंच ह्रौंह्रः श्रीव्योमावासो जगन्मयः ॥४७॥
त्रांत्रींत्रूंतारकब्रह्म क्रांक्रींक्रूं कृष्णविग्रहः ॥ ह्रांह्रीं-
ह्रूंहरिरित्युक्तो म्रांम्रींम्रूं मारितासुरः ॥ ४८ ॥
श्रांश्रींश्रूंशिशुपालघ्नो भ्रांभ्रींभ्रूंभयभंजनः ॥ ज्रां-

त्रींत्रूं त्रिजगन्नाथः श्रांश्रींश्रूं चंडिकामयः ॥ ४९ ॥
प्रांप्रींप्रूंपार्वतीप्राणः स्रांस्रींस्रूं च सुदर्शनः ॥
ऌंऌींऌूंऌिपिविन्यासः केशवादिविधायकः ॥५०॥
लक्ष्मीनारायणो देवः शक्तिं श्रींकामपूर्वकः ॥
ह्रींश्रींक्लींआंकीर्तियुक्तः केशवः क्लेशनाशनः ॥५१॥
ह्रींश्रींक्लींआंकांतियुक्तो नारायण उदारधीः ॥
ह्रींश्रींक्लींइं तुष्टियुक्तो माधवः पद्मभूस्तुतः ॥५२॥
ह्रींश्रींक्लींईंपुष्टियुक्तो गोविंदो गरुडध्वजः ॥
ह्रींश्रींक्लींउंधृतिप्रोक्तो विष्णुर्वैकुंठमंदिरः ॥५३॥
ह्रींश्रींक्लींऊंशांतियुक्तो मधुहा मधुसूदनः ॥

चितः ॥ ह्रींश्रींक्लींटं विनयया मुकुंदो सुरमर्दनः
॥६४॥ ह्रींश्रींक्लींठं नंदसुतः सुनंदासमलंकृतः ॥
ह्रींश्रींक्लींडं स्मृतिप्राप्तो नंदी भुवननंदनः ॥६५॥
ह्रींश्रींक्लींढं ऋद्धियुक्तो नरो नारायणांकितः ॥
ह्रींश्रींक्लींणं नरकजित् समृद्धिपरिसेवितः ॥६६॥
ह्रींश्रींक्लींतं शुद्धियुक्तो हरिर्हर्षवशीकृतः ॥ ह्रीं-
ह्रींक्लींथं बुद्धियुक्तः कृष्णः कलिमलापहः ॥६७॥
ह्रींश्रींक्लींदं सत्यशीलो भूत्यायुक्तो भयापहः ॥
ह्रींश्रींक्लींधं मतियुतः सात्वतः सात्विकार्चितः ६८
ह्रींश्रींक्लींनं क्षमाशीलः शौरिः सूरिजनाधिपः ॥

ह्रींश्रींक्लींपं रमारामः शूरः शरणवत्सलः ॥ ६९ ॥
ह्रींश्रींक्लींफं उमाकांतो जनार्दन इलाप्रियः ॥
ह्रींश्रींक्लींबं क्लेदनीयुग् भूधरो भूधरालयः ॥ ७० ॥
ह्रींश्रींक्लींभं भिन्नया युग् विश्वमूर्तिर्विशेषवित् ॥
ह्रींश्रींक्लींमं वसुदया वैकुंठः कुंठिताशयः ॥ ७१ ॥
ह्रींश्रींक्लीं यं वसुधयाऽलंकृतः पुरुषोत्तमः ॥ ह्रीं-
श्रींक्लींरं पराप्राणो बली बलसमन्वितः ॥ ७२ ॥
ह्रींश्रींक्लींलं परायिण्या पावितश्च बलानुजः ॥ ह्रीं-
श्रींक्लींवं सूक्ष्मया युग् बालो बालपराक्रमः ॥७३॥
ह्रींश्रींक्लींशं वृषघ्नश्च संध्यायुक् शांतिविग्रहः ॥

चितः ॥ र्‍हींश्रींक्लींटं विनयया मुकुंदो मुरमर्दनः
॥६४॥ र्‍हींश्रींक्लींठं नंदसुतः सुनंदासमलंकृतः ॥
र्‍हींश्रींक्लींडं स्मृतिप्राप्तो नंदी भुवननंदनः ॥६५॥
र्‍हींश्रींक्लींढं ऋद्धियुक्तो नरो नारायणांकितः ॥
र्‍हींश्रींक्लींणं नरकजित् समृद्धिपरिसेवितः ॥६६॥
र्‍हींश्रींक्लींतं शुद्धियुक्तो हरिर्हर्षवशीकृतः ॥ र्‍हीं-
र्‍हींक्लींथं बुद्धियुक्तः कृष्णः कलिमलापहः ॥६७॥
र्‍हींश्रींक्लींदं सत्यशीलो भूत्यायुक्तो भयापहः ॥
र्‍हींश्रींक्लींधं मतियुतः सात्वतः सात्विकार्चितः६८
र्‍हींश्रींक्लींनं क्षमाशीलः शौरिः सूरिजनाधिपः ॥

ह्रींश्रींक्लींपं रमारामः शूरः शरणवत्सलः ॥ ६९ ॥
ह्रींश्रींक्लींफं उमाकांतो जनार्दन इलाप्रियः ॥
ह्रींश्रींक्लींवं छेदनीयुग् भूधरो भूधरालयः ॥ ७० ॥
ह्रींश्रींक्लींभं भिन्नया युग् विश्वमूर्तिर्विशेषवित् ॥
ह्रींश्रींक्लींमं वसुदया वैकुंठः कुंठिताशयः ॥ ७१ ॥
ह्रींश्रींक्लीं यं वसुधयाऽलंकृतः पुरुषोत्तमः ॥ ह्रीं-
श्रींक्लींरं पराप्राणो वली वलसमन्वितः ॥ ७२ ॥
ह्रींश्रींक्लींलं परायिण्या पावितश्च वलानुजः ॥ ह्रीं-
श्रींक्लींवं सूक्ष्मया युग् वालो वालपराक्रमः ॥७३॥
ह्रींश्रींक्लींशं वृषघ्नश्च संध्यायुक् शांतिविग्रहः ॥

ह्रींश्रींक्लींपं वृषभज्ञायुक्तपांडित्यमंडितः ॥ ७४ ॥
ह्रींश्रींक्लींसं प्रभायुक्तो हंसो हतबकासुरः ॥ ह्रीं-
ह्रींश्रींक्लींहं निशानंदी वराहो धरणीस्तुतः ॥७५॥
ह्रींश्रींक्लींलं मोघया युक्तो विमलो विमलांतकः ॥
ह्रींश्रींक्लींक्षंविद्युदग्निर्नरसिंहो भयापहः ॥ ७६ ॥
क्ष्रौंन्सिंहः क्रोधरूपः कलिकालभयप्रदः ॥ ह्रां-
ह्रींह्रौंह्रः कृपासिंधुः ह्रांह्रींह्रौंह्रः श्रियः पतिः
॥७७॥ क्लांक्लींक्लौंक्लः कामदेवस्त्रैलोक्यवशकारकः ॥
ह्क्लौंवासुदेवाय नमो मनोभवस्वरूपिणे ॥७८॥ ह्क्लीं
संकर्षणाय नमो मकरध्वजमूर्तये ॥ ह्क्लूं प्रद्युम्नाय

नमो बालकंदर्परूपिणे ॥ ७९ ॥ हसक्लिमनिरुद्धाय मन्मथाय नमो नमः ॥ हसक्लंनारायणाय कामदेवाय ते नमः ॥८०॥ मूलेन व्यापकं कृत्वा वासुदेवं स्मरन् हृदि ॥ तावद्ध्यायेन्महेशानि यावत्तन्मयतां व्रजेत् ॥८१ ॥ निश्चलत्वं यदा याति मनो ध्यानवशात्प्रिये ॥ तदा मंत्रस्य यंत्रस्य सिद्धिर्भवति नान्यथा ॥ ८२ अल्पायासेन देवेशि साधयेत्स्वमनोरथान् ॥ स्वर्भूपाताललोकेषु यत्किंचिन्मनसेप्सितं ॥ ८३ ॥ तत्सर्वं जायते देवि साधकस्य वरानने ॥ प्राणापानेन वा कुर्यान्निश्चल्यं मनसः प्रिये ॥ ८४ ॥

इति गोपालदेवस्य रहस्यातिरहस्यकं ॥ नाम्नां सह-
स्रं देवेशि कथितं तव भक्तितः॥८५॥ त्वं मे प्राणा-
धिका यस्मादिदं च प्राणतोऽधिकम्॥तस्मात्ते गदितं
देवि सावधाना सुसाधय ॥८६॥ नेदं शठाय मूर्खा-
य कृपणाय दुरात्मने ॥ दांभिकाय कुशिष्याय देयं
सर्वांगसुंदरि ॥ ८७ ॥ विनीताय सुशिष्याय धीराय
साधकाय च ॥ वैष्णवाय विशुद्धाय गोपालोपास-
काय च ॥८८ ॥ गुरुसेवासमर्थाय गुरुसेवापराय
च ॥ गुरुं गोपालरूपेण पश्यतेऽभेदचक्षुषा ॥८९॥
देयं शांताय भक्ताय प्राणादपि प्रियाय च ॥ प्र-

काशयेत्कुपात्रे यः स महामृत्युमाप्नुयात् ॥ ९० ॥
अनेन सदृशं देवि स्तोत्रं नास्ति महीतले ॥ या-
न्यान्मनोरथान्कृत्वा पठेत्तांस्तानवाप्नुयात् ॥९१॥
सर्वरोगप्रशमनमपमृत्युविनाशनम् ॥ दीर्घायु-
ष्यप्रदं देवि पुत्रपौत्रविवर्धनम् ॥ ९२ ॥ पुत्रप्रद-
मपुत्राणामगतीनां गतिप्रदम् ॥ वर्णत्रयेण देवेशि
पठनीयं परात्परम् ॥ ९३ ॥ तत्रापि ब्राह्मणैरेव
साधनीयं विशेषतः ॥ श्रवणाच्छूद्रजातीनामि-
दं निष्फलतां व्रजेत् ॥ ९४ ॥ विधिना प्रा-
तरुत्थाय स्नात्वा निर्मलमानसः ॥ संध्यादिकर्म

निर्वर्त्य ततः पूजागृहं व्रजेत् ॥ १५ ॥ उपविश्या-
सने तत्र भूतशुद्धिं समाचरेत् ॥ ततः प्राणान्प्रति-
ष्ठाप्य मातृकान्यासपूर्वकम् ॥ १६ ॥ मूलमंत्रस्य
विधिनाभ्यासान्कुर्यात्सुलोचने ॥ चक्रराजं सम-
भ्यर्च्यैत्पात्रस्थापनपूर्वकम् ॥ १७ ॥ मूलमंत्रं जपे-
द्देवि सहस्रत्रितयं ततः ॥ रहस्यं नामसाहस्रं
पश्चाद्देवि पठेन्नरः ॥ १८ ॥ वारमेकं पठेद्यस्तु
सर्वपापक्षयो भवेत् ॥ नित्यकर्मस्वनुष्ठानात्पातकं
क्षयमाप्नुयात् ॥ १९ ॥ वारद्वयं तु योऽधीते तस्य
पुण्यफलं शृणु ॥ गंगादिसर्वतीर्थेषु स्नातो भवति

सुव्रत ॥ ३०० ॥ वारद्वयं तु योऽधीते पूजायाः फलमाप्नुयात् ॥ कुरुक्षेत्रे स्वर्णदानाद्गंगातीरनिवासतः ॥ १ ॥ निर्जले मरुभूदेशे प्रपादानाच्च नित्यशः ॥ अविमुक्ते महाक्षेत्रे कोटिब्राह्मणभोजनात् ॥ २ ॥ कोटिलिंगप्रतिष्ठानाच्छ्वेतद्वीपे महेश्वरि ॥ यत्फलं जायते देवि तत्फलं पाठमात्रतः ॥ ३ ॥ महापातकपुंजानां नाशनं स्मरणादपि ॥ प्रदहेद्देवदेवेशि तूलराशिमिवानलः ॥ ४ ॥ पंचोपचारैः संपूज्य देवं श्रीपुरुषोत्तमम् ॥ चतुर्वारं पठेदेतत्पश्चान्नामसहस्रकम् ॥ ५ ॥ सर्वे रोगाः प्रणश्यं-

ति दीर्घमायुष्य विंदति ॥ ज्वरार्तस्य शिरः स्पृष्ट्वा पठेन्नामसहस्रकम् ॥ ६ ॥ ज्वरः सद्यो विलीयेत शिरःशूलादिसंयुतः सर्वव्याधिनिवृत्त्यर्थं चंदनं चाभिमंत्रयेत् ॥ ७ ॥ पंचधा यः पठेदेतन्नामसाहस्रमुत्तमम् ॥ ग्रहोपसर्गाः कृत्यादिबाधा नश्यंति तत्क्षणात् ॥ ८ ॥ वारपट्कं पठेद्यस्तु गोपालध्यानतत्परः ॥ वर्षमात्रेण देवेशि दरिद्रो धनमाप्नुयात् ॥ ९ ॥ पुत्रप्राप्त्यै तु वंध्यानां नवनीतं मनोरमम् ॥ सप्तधा मंत्रितं दद्यात्पुत्रलाभो भवेद्ध्रुवम् ॥ १० ॥ राजानं यो वशीकर्तुं चिंतयेन्मनसा शिवे ॥ सप्त-

वारं तदा जप्यात्तद्देहाभिमुखं प्रिये ॥ ११ ॥ राजा-
नं वशयेत्क्षिप्रं नात्र कार्या विचारणा ॥ अष्टधा
यः पठेद्देवि षण्मासं विजितेंद्रियः ॥ १२ ॥ तन्मु-
खालोकमात्रेण मुह्येल्लोकत्रयं शिवे ॥ तस्मिन्प्रयो-
गान्ये कुर्युः शंकरप्राणवल्लभे ॥ १३ ॥ ते सुदर्श-
नचक्रेण चूर्ण्यंते नात्र संशयः ॥ अभिचारक्रियां
कुर्याद्यस्तस्मिन् साधकोत्तमे ॥ १४ ॥ तन्नारसिंहो
भगवान् सद्यो हंति न संशयः ॥ नानेन सदृशं
स्तोत्रं त्रिलोक्यां वर्तते शिवे ॥ १५ ॥ नववारं
पठेद्यस्तु वृंदारण्ये विशेषतः ॥ यद्वा मधुवने देवि

वंशीवटतलेऽथवा ॥१६॥ कदंबवनमूले वा निष्का-
मो विजितेंद्रियः ॥ स षण्मासेन देवेशि कृष्णं
पश्यति चक्षुषा ॥ १७ ॥ एवं नवावृत्तिफलं कथि-
तं ते सुरेश्वरि ॥ नवावृत्त्या न साध्यं यत्तन्नास्त्येव
जगत्रये ॥१८॥ वसन् वृंदावने रम्ये यमुनाकुंज-
भूगतः ॥ पद्मैर्वा तुलसीपुष्पैश्चंपकैर्वा कदंबकैः
॥ १९ ॥ शालग्रामशिलां योऽर्चेन्नाममंत्रैरतंद्रितः ॥
चतुर्थी नमसा युक्तैस्तारकाम श्रिया युतैः ॥ २० ॥
ॐक्लींश्रीं देवाय नमः ॥ एवं सर्वाणि १०००० 
नामानि कृत्वा शालग्रामशिलां पूजयेदुक्तफलदो

भवति ॥ न शक्नोमि फलं तस्य वक्तुं वर्षशतैरपि ॥
सर्वक्रतुफलं लब्ध्वा सर्वकामानवाप्नुयात् ॥ २१ ॥
षण्मासमाचरेद्यस्तु विधिमेनं शुचिस्मिते ॥ प्रत्य-
क्षीभूय कृष्णोऽस्मै वरं यच्छति कामितम् ॥ २२ ॥
न पुनर्जायते योनौ मरणं नास्ति चापरम् ॥ कोटि-
जन्मार्जितं पापं त्यक्त्वा वैकुंठमाप्नुयात् ॥ २३ ॥
रहस्यं नामसाहस्रं निष्कामं यो जपेच्छिवे ॥ ब्रह्म-
ज्ञानमवाप्नोति येन मुच्येत बंधनात् ॥ २४ ॥
धनार्थी धनमाप्नोति यशोऽर्थी लभते यशः ॥ विद्या-
र्थी प्राप्नुयाद्विद्यां पुत्रार्थी लभते सुतान् ॥ २५ ॥

स्तोत्रेणानेन देवेशि नित्यं पूजाफलं लभेत् ॥
बहूनां जन्मनामंते गोपालोपासको भवेत् ॥ २६ ॥
नामसाहस्रपाठश्च तत्राप्यतिसुदुर्लभः ॥ विरला
एव लोकेऽस्मिन् वैष्णवाचारवेदिनः ॥ २७ ॥ त-
त्रापि विरला देवि नामसाहस्रपाठकाः ॥ विना
नामसहस्रं यस्तोपयेत्पुरुषोत्तमम् ॥ २८ ॥ लोचना-
भ्यां विहीनः स रूपं पश्यति दुर्मतिः ॥ रहस्यं नाम-
साहस्रं त्यक्त्वा यः सिद्धिकामुकः ॥२९॥ स सोपा-
नपथं त्यक्त्वा गच्छेदूर्ध्वं विमूढधीः ॥ अयुतं यः पठे-
देतत् षण्मासेन समाहितः ॥ ३० ॥ स सर्वाः संपदो

यायादंते मुक्तिमवाप्नुयात् ॥ संक्रांतौ विषुवे चैव गुरोर्जन्मदिने तथा ॥ ३१ ॥ द्वादश्यां पौर्णिमायां च ग्रहणे चंद्रसूर्ययोः ॥ यः पठेत्प्रयतो देवि तस्य पापक्षयो भवेत् ॥ ३२ ॥ रासोत्सवे महादेवि पौर्णमास्याममंदधीः ॥ पठेत्समाहितमनाः सर्वसिद्धिं स विंदति ॥ ३३ ॥ इति श्रीराधिकानाथनाम्नासाहस्रमीरितम् ॥ स्मरणात्पापराशीनां खंडनं मृत्युनाशनं ॥ ३४ ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः ॥ परद्रव्यापहरणं परद्वेषसमन्वितम् ॥ ३५ ॥ मानसं वाचिकं कायं यत्पापं पापसंभवम् ॥ सहस्रनामपठना-

त्सर्वं नश्यति तत्क्षणात् ॥ ३६ ॥ महादारिद्र्ययुक्तो यो वैष्णवो विष्णुभक्तिमान् ॥ कार्तिक्या यः पठेद्रात्रौ शतमष्टोत्तरं सुधीः ॥ ३७ ॥ पीतांबरधरः श्रीमान्सुगंधिपुष्पचंदनैः ॥ पुस्तकं पूजयेद्देवि नैवेद्याद्युपचारकैः ॥ ३८ ॥ तुलसीमालया युक्तो वैष्णवं पूजयेन्निशि ॥ पठेत्सहस्रनामाख्यं ततः सिद्धिः प्रजायते ॥ ३९ ॥ महानिशायां सततं वैष्णवो यः पठेत्सदा ॥ देशांतरगता लक्ष्मीः समायाति न संशयः ॥ ४० ॥ त्रैलोक्ये च महादेवः सुंदर्यः काममोहिताः ॥ मुग्धाः स्वयं समायांति वैष्णवं च

भजंति ताः ॥ ४१ ॥ रोगी रोगात्प्रमुच्येत बद्धो मुच्येत बंधनात् ॥ गुर्विणी जनयेत् पुत्रं कन्या विंदति सत्पतिम् ॥ ४२ ॥ राजानो वश्यतां यांति किं पुनः क्षुद्रमानुषाः ॥ सहस्रनामपठनाच्छ्रवणात्पूजनात्प्रिये ॥ ४३ ॥ धारणात्सर्वमाप्नोति वैष्णवो नात्र संशयः ॥ वंशीवटे चान्यवटे तथाश्वत्थस्य मूलके ॥ ४४ ॥ कदंबपादपतले श्रीगोपालस्य संनिधौ ॥ यः पठेद्वैष्णवो नित्यं स याति हरिमंदिरम् ॥ ४५ ॥ यद्गृहे पुस्तकं देवि पूजितं परितिष्ठति ॥ न मारी न च दुर्भिक्षं नोपसर्गभयं भवेत्

॥ ४६ ॥ सर्वे भूतपिशाचाद्याः पलायंतेऽतिदूरतः ॥
श्रीगोपालो महादेवि वसेत्तस्य गृहे सदा ॥ ४७ ॥
मथुरायां महाक्षेत्रे तथा मंदरकानने ॥ वृंदावने
द्वारकायां गोकुले नंदपत्तने ॥ ४८ ॥ गोवर्धनगि-
रौ रम्ये तुलसीकानने तथा ॥ समुद्रगानदीतीरे
कालीयहृदसन्निधौ ॥ ४९ ॥ वेंकटे रंगनाथे च
बदर्याश्रममंडले ॥ वाराणस्यां प्रयागे च जगन्ना-
थाश्रमे तथा ॥ ५० ॥ यत्र कुत्रापि देवेशि जाह्न-
वीयमुनातटे ॥ पुण्येषु गंगाद्वारादिक्षेत्रेषु वरव-
र्णिनि ॥ ५१ ॥ यः साधयेदिदं स्तोत्रं श्रीगोपालै-

कतानवाक् ॥ स सर्वसंपदो लब्ध्वा यात्यंते वैष्णवं पदम् ॥५२॥ श्रीवृंदावनचंद्रेण पुरेदं रासमंडले ॥ राधायै गदितं भद्रे तथा वै नारदाय च ॥ ५३ ॥ नारदाल्लब्धवान्देवि दुर्वासा मुनिसत्तमः ॥ ममावतारो लोकेषु यो रुद्र इति कीर्तितः ॥ ५४ ॥ तेन प्रोक्तं वसिष्ठाय वसिष्ठेन प्रकाशितम् ॥ एवं परंपराप्राप्तं विरला वैष्णवा जनाः ॥ ५५ ॥ कलौ जानंति देवेशि मया तुभ्यं प्रकाशितम् ॥ गोपनीयं त्वया देवि यदि चेत्सिद्धिमिच्छसि ॥ ५६ ॥ प्राणादप्यधिकं देवि मम पादौ स्पृशामि ते ॥ गोप-

नीयं गोपनीयं गोपनीयं प्रयत्नतः ॥ ३५७ ॥
इति श्रीसंमोहनाख्ये महातंत्रे पार्वतीश्वरसंवादे
गोपालसहस्त्रनामस्तोत्रं समाप्तम् ॥ ॥ ॥

अथ गोपालस्तवराजस्तोत्रम् ॥ ॐ अस्य श्रीगो-
पालस्तोत्रमंत्रस्य ॥ नारद ऋषिः ॥ अनुष्टुप्छंदः ॥
श्रीकृष्णः परमात्मा देवता ॥ श्रीकृष्णप्रीत्यर्थे जपे
विनियोगः ॥ ॥ अथ ध्यानम् ॥ सजलजलदनीलं
दर्शितोदारशीलं करतलधृतशैलं वेणुवाद्ये रसा-
लं ॥ व्रजजनकुलपालं कामिनीकेलिलोलं तरुण-
तुलसिमालं नौमि गोपालबालम् ॥ १ ॥ ॥ नारद

उवाच ॥ नवीननीरदश्यामं नीलेंदीवरलोचनम् ॥
वल्लवीनंदनं वंदे कृष्णं गोपालरूपिणम् ॥ २॥ स्फुर-
द्बर्हिदलोद्बद्धनीलकुंचितमूर्धजम् ॥ कदंबकुसुमोद्भा-
सि वनमालाविभूषितम् ॥ ३ ॥ गंडमंडलसंसर्गिच-
लत्कांचनकुंडलम् ॥ स्थूलमुक्ताफलोदारहारोद्योति-
तवक्षसम् ॥ ४॥ हेमांगदतुलाकोटिकिरीटोज्ज्वलवि-
ग्रहम् ॥ मंदमारुतसंक्षोभिचलितांबरसंचयम् ॥ ५ ॥
रुचिरौष्ठपुटन्यस्तवंशीमधुरनिःस्वनैः ॥ लसद्गोपा-
लिकाचेतो मोहयंतं मुहुर्मुहुः ॥ ६ ॥ वल्लवीवदनां-
भोजमधुपानमधुव्रतम् ॥ क्षोभयंतं मनस्तासां सस्मे

रापांगवीक्षणैः ॥ ७ ॥ यौवनोद्भिन्नदेहाभिः संसक्ताभिः
परस्परं ॥ विचित्रांबरभूषाभिर्गोपनारीभिरावृतम्
॥ ८ ॥ प्रभिन्नांजनकालिंदीजलकेलिकलोत्सुकम् ॥
योधयंतं क्वचिद्गोपान् व्याहरंतं गवां गणम् ॥ ९ ॥
कालिंदीजलसंसर्गिशीतलानिलकंपिते ॥ कदंब-
पादपच्छाये स्थितं वृंदावने क्वचित् ॥ १० ॥ रत्न-
भूधरसंलग्नरत्नासनपरिग्रहम् ॥ कल्पपादपमध्यस्थ-
हेममंडपिकागतं ॥ ११ ॥ वसंतकुसुमामोदसुरभी-
कृतदिङ्मुखे ॥ गोवर्धनगिरौ रम्ये स्थितं रासर-
सोत्सुकम् ॥ १२ ॥ सव्यहस्ततलेन्यस्तगिरिवर्या-

तपत्रकम् ॥ खंडिताखंडलोन्मुक्तमुक्तासारघनाघनं
॥ १३ ॥ वेणुवाद्यमहोल्लासकृतहुंकारनिःस्वनैः ॥
सवत्सैरुन्मुखैः शश्वद्गोकुलैरभिवीक्षितम् ॥ १४ ॥
कृष्णमेवानुगायद्भिस्तच्चेष्टावशवर्तिभिः ॥ दंडपा-
शोद्यतकरैर्गोपालैरुपशोभितम् ॥ १५ ॥ नारदा-
द्यैर्मुनिश्रेष्ठैर्वेदवेदांगपारगैः ॥ प्रीतिसुस्निग्धया
वाचा स्तूयमानं परात्परम् ॥ १६ ॥ य एवं चिंत-
येद्देवं भक्त्या संस्तौति मानवः ॥ त्रिसंध्यं तस्य
तुष्टोऽसौ ददाति वरमीप्सितम् ॥ १७ ॥ राजवल्लभ-
तामेति भवेत्सर्वजनप्रियः ॥ अचलां श्रियमाप्नोति

स वाग्मी जायते ध्रुवम् ॥ १८ ॥ इति श्रीगौतमीयतंत्रे गोपालचूडामणिस्तवराजः संपूर्णः ॥ ॥



इदं पुस्तकं श्रीवैद्यकमलशरणगोस्वामितो लब्ध्वा भगीरथात्मज हरिप्रसादेन मुंबय्यां निर्णयसागराख्यमुद्रणालये मुद्रयित्वा प्रकाशितम् ।

श्रीमद्वेदमार्गप्रतिष्ठापनाचार्यपुष्करपीठस्थ श्रीमन्निम्बार्काचार्यश्रीघनश्यामशरणदेवाज्ञया तच्छिष्येण भगीरथात्मजहरिप्रसादेन मोहमय्याख्यपत्तने निर्णयसागराख्यमुद्रणालये मुद्रयित्वा प्रसिद्धिं नीतम् ।



विक्रमादित्य संवत् १९६२, शके १८२७.

पुस्तक मिलनेका ठिकाना-

हरिप्रसाद भगीरथजी,

कालिकादेवीरोड़ रामवाड़ी.

मुंबई.

हनुमानदास व्रजवल्लभजीका पुस्तकालय

कानपुर.